# श्रीश्रीरामकृष्णकथामृतम्

## [श्रीम—कथितम्]

तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम्
श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ये भूरिदा जनाः ।

श्रीजगन्नाथानन्द स्वामिना अनूदितम्

प्रथमसंस्करणम्

१९५१

मूल्यं रूप्यकद्वयम्

SRI RAMAKRISHNA ASHRAMA
Shivalaya, Kanya Kadal,
Srinagar-1 Kashmir.

# निवेदनम्

विदितमस्ति सर्वेषां विद्यावताम् । श्रीम-कथितं श्री श्री रामकृष्ण कथामृतं पंचभिर्भागै विभक्तम् । तत्तु मौलिकं वङ्गभाषया रचितम् । इदं कथामृतन्तु सर्वजनादृतत्वात् हिन्दि गुजराटी-तेलुगु उत्कल इंराजी प्रभृतिषु भाषासु नानादेशप्रदेशेषु च-भाषान्तरितमभवत् ।

परन्तु संस्कृतभाषानूदितस्य कथामृतस्याभावमुपलभ्य चतुर्भ्योभागेभ्यः कथामृतस्य सप्तखण्डानि संगृह्य यथानुरूपं यथा-मति अनूद्य च ग्रन्थमेनं सम्पादयितुं प्रवृत्ताःस्म वयम् ।

पूर्वमयमनुवादः "सूर्योदय' 'सन्देशः' 'संस्कृतसाहित्य परिषत्" "मनोरमा" प्रभृतिषु मासिक पत्रिकासु प्रकाशितश्चासीत् । अस्य ग्रन्थस्य पाण्डुलिपिः वेलुड्मठस्य भूतपूर्व संस्कृताध्यापकेन सप्ततीर्थेन श्रीमता उपेन्द्रनाथ तर्काचार्य्य महोदयेन संशोधिता । पारलाखेमण्डि संस्कृत कलाशालाया भूतपूर्व प्रधानाध्यापकेन मनोरमापत्रिकायाः सम्पादकेन साहित्य शिरोमणिना मीमांसा विद्या प्रवीणेन आयुर्वेदाचार्य्येण, M.A.P.O.L:- विरुदभाजा श्री अनन्त त्रिपाठि शर्मणा मुद्रणसंशोधनादिषु कृता सहायना । पण्डितेन श्रीमता आकुलमिश्र काव्यतीर्थ महोदयेन कृत प्रयत्नेन इदं प्रकाशितमिति हार्दिकं धन्यवादं ज्ञापयामि । गङ्गोदकेन गङ्गापूजावत् अनेन व्यापारेण प्रियतामिति पार्थये अन्तर्य्यामिणं परम पुरुषमिति च ।

श्रीरामकृष्णमठः,

भुवनेश्वरम्,

जगन्नाथानन्दः

१ । ९ । १९५१ .

# सूचीपत्रम्

विषयः। पृष्ठाङ्काः

श्रीरामकृष्णोद्गार चरितम् १—८

प्रथम कथा

अध्यापकस्य प्रथमं परमहंस देवस्य दर्शनम्— १—४

द्वितीय दर्शने गुरुशिष्ययोः संवादः— १५

अध्यापकस्य तृतीयं परमहंस देवस्य दर्शनम्— २९

चतुर्थमध्यापकस्य परमहंस दर्शनम्— ३५

द्वितीय कथा।

श्री ईश्वरचन्द्र विद्यासागरस्य गृहे श्रीरामकृष्णः —३६—५६

तृतीय कथा।

श्रीयुक्त केशवचन्द्रेण सार्द्धं श्रीरामकृष्णस्य नौकाविहारः-५७ ८१

चतुर्थ कथा।

फलहारिणीं कालिका पूजादिवसे भक्त परिवृतः
श्रीरामकृष्णः— ८२—९४

पंचमकथा।

दक्षिणेश्वर भक्त परिवृतः श्रीरामकृष्णः— ९५—१०३

षष्ठ कथा।

दक्षिणेश्वरे पण्डित शशधरादिना सह श्रीरामकृष्णः- १०४—१३७

सप्तम कथा।

दक्षिणेश्वरे राखालाध्यापक महिमचरण प्रभृतिभिर्भक्तैः सह
श्रीरामकृष्णः— १३८—१५३

# अभिमतम्

संस्कृतभाषया अनूदितं श्रीश्रीरामकृष्णकथामृतं परमतीवरमणीयम्। अस्य बह्वोंशा 'मनोरमायां' प्रकाशिता आसन्। उदाररमणीयं विषयजातमत्र सन्निवेशितम्। अनुवादस्तु आक्षरिको मौलिकीं रीतिं न जहाति। भाषा तु सरलसरला भावभरिता अनुवादकानां श्रीजगन्नाथानन्दस्वामिनां सिद्धहस्ततां द्योतयति। संस्कृतसाहितीं परिशीलयतां सहृदयानां परमादरस्य पदं स्यादित्याशास्ते।

श्रीअनन्तत्रिपाठिशर्मा
''मनोरमा''सम्पादकः
ता.२८।८।५१.

# श्रीरामकृष्णोदारचरितम् ।

"महद् यक्ष' भुवनस्य मध्ये तपसि क्रान्त' सलिलस्य पृष्ठे तस्मिञ्छ्रयन्ते य उ के च देवा वृक्षस्य स्कन्धः परित इव शाखा"

कारणसत्वे कार्य्यसत्वम् , कारणाभावात् कार्य्याभाव इति न्यायः। तेन कार्यकारणसम्बन्धेन कालचक्रस्यावर्तनादिह स'सारे सर्वेषां जन्यपदार्थानां चलत्वात् परिणामित्वाच्च फलमपि चल' भवति अनेकैर्भक्तैः प्रार्थिता अवतारा आचार्याश्च यदा धर्मस्य ग्लानिर्भवति तदा भूयोभूय आगत्य भवाब्धौ मग्नाँल्लोकान् सन्मार्ग प्रदर्शयन्ति। अथेश्वरस्याघटनघटनपटीयसी महामाया स्वप्रभावेण तरङ्गबुद्बुदफेनन्यायेन आच्छादयति स'सारम्। एव' पुनः पुनरीश्वरो भूतानुजिघृक्षया लीलाकैवल्येन च रूपलावण्यमयमूर्तिं स्वीकृत्याविर्भवति जगत्परिरक्षति च। तमःप्रावल्यतः प्रायेण विहितार्थकृतिवर्जिते परानुकृतिनिरते परेशश्रवणमननादिकुण्ठिते भारतजनसमाजे विपरीतशिक्षाचारादिभिरत्यन्त' विकले रागग्राहोग्रे सम्मोहजले भवाब्धौ मज्जत्सु जनेषु सर्वसत्वोपकृतिवाञ्छया कश्चिन्महापुरूषो बङ्गप्रदेशे "कामारपुकुर"ग्रामे ब्राह्मणकुले क्षुदि-

रामचट्टोपाध्यायस्य पत्न्यां चन्द्रामणिसमाख्यायामाविर्बभूव। दशमासेषु व्यतीतेषु फाल्गुने मासि द्वितीयायां तिथौ १८३६ ख्रिष्टाब्दे १२४२बङ्गाब्दे उषस: किंचित्पूर्वं भगवान् रामकृष्णो मातुर्जठराद्वततार।

यथोदितं चन्द्रं दृष्ट्वा सागरोर्मि: हर्षं प्राप्नोति तथा तं विलोक्य वसुन्धरा परं धन्याऽभूत् । दिशः सर्वाः प्रसन्नतामापुः । मन्दं मन्दं शुभशंसी समीरणो ववौ पार्वणचन्द्रसदृशं राजीवलोचनं सुन्दरसन्निवेशं बालकं दृष्ट्वा ग्रामवासिनः पुरवासिनश्चात्यन्तमाह्लादिता बभूवुः अवतीर्णस्य तस्य बान्धवैर्गदाधर इति बाल्यावस्थायां नाम विदधे । एवं शशिकलावद् वर्द्धमानं पञ्चवर्षदेशीयं शिशुं विद्यालये शिक्षार्थं पितरौ प्रेरितवन्तौ । आजन्म ईश्वरे तीव्रानुरागवशात् पूर्णवैराग्यवशाच्च गदाधरो विद्यालयं गत्वा विद्याभ्यासे मानसं न निदधे ।

जगज्जन्मस्थितिभङ्गकर्त्री परा देवता जन्ममरणादि संसारमपाकर्तुमर्हति करुणयेति सैव ममाराध्या न पुनरपरं दुःखसाधनं विषयज़ातमाद्यन्तवत् क्षणमात्रस्थिति शारद-मेघतुल्यमापातरम्यं पर्यन्तापरं स्रक्चन्दनवनितादि सुखं दुःखमेव विजानन् कथं कामये ! कथं वा तदर्थं तदुपायमनुसराणि ?

"यस्तन्न वेद किमृचा करिष्यति -" इत्यादि चैवम्प्रकारेणालोचयतस्तस्य आ जन्मनः परमात्मतत्त्वव्यतिरेकेण

अन्यत्र कुत्रापि विषये मनो न गतम् । तैलधारावदनवच्छिन्ना एका चिन्ता आसीत् । यथा अजातपक्षाः क्षुधिता बालाः मातरमुपासते मातृगतप्राणाश्च भवन्ति तद्वत् स गदाधर ईश्वरगतप्राण आसीत् । अपि च धर्माधर्मवशात् पौनःपुन्येन परिवर्तिनि जरामरणयुतसंसार— चक्रे कः पुमान् नेतः प्रैति मृतो वा न पुनरायाति ? अपि तु सर्वो जन्तुरुत्पन्नो मृतश्च भवत्यवश्यम् । ये तु ब्रह्मविद्याविशारदाः साधनचतुष्टयसम्पन्नास्ते केवलेनेश्वरप्राप्तिद्वारेण जरामरणजं भयं जयन्ति । ततश्च स यदा एकादशवर्षस्तदा स्वबालैः सह विशालाक्षीनाम्नीं ग्राम्यदेवीं द्रष्टुं पथि गच्छन् अकस्मात् ज्योतिर्मयं पुरुषं ददर्श; तदास्य वाह्यसंज्ञा नासीत्; दिग्देशकालास्तिरोदधिरे तस्मात्; स समाधिमग्नो बभूव । स्वमुखेन तेनोक्तमेतत् । "ईश्वरकल्पपुरुषाणामवताराणां च अग्रे फलं भवति पश्चात् पुष्पम् । यथा कुष्माण्डस्य लताया अग्रे फलानि भवन्ति पश्चात् पुष्पाणि ज़ायन्ते तद्वत्"।

स हि महात्मा ईश्वरलाभानन्तरं स्वप्रयोजनाभावेऽपि लोकशिक्षार्थं साधनानि तपांसि च स्वयं विदधे । अपि च उक्तं स्वपार्षदान् भक्तान् प्रति "अये ! मम पिता यदा गयाधाम गत्वा पितृपुरुषान् उद्दिश्य पिण्डं ददौ तत्र रात्रौ गयाधीश्वरश्चतुर्भुजो भगवान् गदाधरः स्वप्नदर्शितमूर्तिर्मम पितरमुपदिदेश "तव पुत्रोऽहं भविष्यामि" इति । स्वप्न-

मापन्नः पिता भयविह्वलचित्तः सन् एतदुक्तवान्—हे प्रभो, निर्धनोऽहं ब्राह्मणः केन उपायेन केन उपकरणेन वा अर्चयामि भगवन्तं त्वाम्, न ज़ाने साधनं पूजनञ्च। तत् छ्रुत्वा भगवान् गदाधर उवाच, मा भैषीर्ब्राह्मण! मत्-सेवोपायः सर्वस्ते सुकरो भविष्यति, चिन्तां मा कार्षीः, एवमुक्त्वा तिरोदधे। स एव भगवान् गदाधरः पृथितः पुरुषोत्तमो भूत्वा गदाधरनाम्ना अवन्यां प्रजातः। गदा-धरादागतः पुत्र इत्यतः पिता बाल्यनाम गदाधर इति चक्रे। अवतारपुरूषपरिज्ञानं सर्वथा दुर्लभं भवति ज़ना-नाम्। केवलं विलक्षण—भाग्ययोगात् कोऽपि कदापि तं वेत्ति। यथा च "कोऽद्धा वेद यदि वा न वेद"। यथा वारिचराणां नभश्चराणां च पदचिह्नं द्रष्टुमशक्यम्। तद्वत् अवतारपुरुषाणां ब्रह्मविदां ज्ञानिनां गतिरपि दुर्गमा इति नात्र कश्चिदस्ति विवादहेतुः।

यस्य भगवन्नामश्रवणमात्रेण मुहुर्मुहुः समाधिप्वति-दुर्विगाहभाव—महभावप्रेमाद्यवस्थाः स्वतएव बभूवुः काञ्चन-स्पर्शमात्रेण यस्याङ्गानि विकलानि बभूवुः यस्य च शृण्वतो वेदान्तवाक्यं दिनत्रयेण निर्विकल्पकं समाधिमापन्नस्य पुन-रनुदिनमाविर्बभूव सुदुर्लभा समाधिधारा।

तस्याशेषभूमण्डलप्रथितसिद्धमहिम्नः समाधीश्वरस्य श्रीरामकृष्णस्यालौकिकपवित्रज्ञानकर्मोपदेशपीयूषास्वादेन कृतार्थाः कलिमलहताः प्रायेण जनास्तदीयं शास्त्राचारपूतं कर्मचयं स्मारं स्मारं मुहुरीश्वरबुद्ध्या तं नमस्यन्ते। न हि तस्येश्वरता प्रमाणापेक्ष्या यतो न हि हालिका अपि प्रचण्ड-भास्करमङ्गुल्या निर्दिश्य ज्ञापयितव्या भवन्ति, अयं सूर्य इति। परन्तु रश्मिजालविस्तारेण प्रभाकरं ते स्वयं समधिगच्छन्ति।

अथ पितरि लोकान्तरं गतवति अष्टादश-वर्षवयस्कः स भ्रात्रा ज्येष्ठेन सह कलिकातानगरीमागत्य राणीरासमणिनामधेयायाः कस्याश्चित् कालीमन्दिरे दक्षिणे-श्वरे भगवतीं कालिकादेवीं पूजयितुं नियुक्तो बभूव। एवं पूजां कुर्वन् कतिपयेषु मासेषु व्यतीतेषु परदेवतायां मातरि परानुर-क्तिवशाद् बाह्यपूजायां लुप्ताग्रहो बभूव।

तदानीमुक्तं सादरं तेन यत् परदेवतास्ति मातेत्यत्र सन्देहो न विधेयः। परन्तु मातृपदमद्वयनिर्विशेषब्रह्मपरमेव ततश्च 'मा' इत्यक्षरद्वयेन मातेत्यनेन पदेन वा वाच्यार्थस्या-भेदं विज्ञाय तथोच्यते मया।

अथ बाह्यपूजायामसमर्थः सन् नैरन्तर्येण अहरहः स तद्गतप्राणः क्वचित् बालकवत्, जडवत्, क्वचित् पिशाचवद् उन्मत्तवद् वा विचचार, सदैव हा मातः! हा मातः!! इति वदति स्म। द्वादशवर्षान् विभिन्न-सम्प्रदायानां साधनानि अवलम्ब्य तपश्चकार।

एवं तपः कुर्वन् गभीरध्यानसमये चित्तवृत्तिमतीतः सन् विभिन्नसम्प्रदायेषु या इष्टदेवता आसन्, तासाम् अतीन्द्रियाणि रूपाणि अपश्यत्। यथा-रामलक्ष्मणौ रथे कृष्णार्जुनौ, सीतां कालीं दुर्गाञ्च। ततश्च परिव्राजकाचार्यश्री मित्तोतापुरीत्याख्य वेदान्ततत्त्वज्ञानविशारदस्य महात्मनः सकाशाद् वेदान्ततत्त्वं शुश्राव। तस्मात् सन्यासं जग्राह च। वेदान्तं शृण्वन् निर्विकल्पसमाधिं प्राप।

तथा दृष्ट्वा वेदान्ततत्त्वनिपुणः श्रीमत्तोतापुरी आश्चर्यान्वितो बभूव। उक्तञ्च तेन यःसमाधिश्चत्वारिंशता वर्षैः कठोरतपसा प्राप्तो मया, अयं पुरुषो दिवसत्रयेण तस्य परां काष्ठां प्राप्तवान्। कोऽयं पुरुषः? अद्भुतमिदं चरितमस्य दृष्टं न श्रुतं वा। अथ तथा विस्मित आचार्यः स तस्य श्रीरामकृष्णपरमहंस इति नाम विदधे सहर्षम्। यदा सर्वाणि साधनानि समाप्तानि, तथा तस्य समाप्तिमाप समाधिः तदा स रामकृष्णो जगन्मातरमवादीत्-यास्याम्यहं स्वधाम; किं प्रयोजनमनेन शरीरेण? कामकाञ्चनाशक्तिमता सह स्थातुं न शक्नोमि। एतच्छ्रुत्वा जगदाधारभूता आद्या शक्तिर्जगज्जननी तमुवाच—हे वत्स! तिष्ठ किञ्चित् कालम्, सर्वे शुद्धाः पूताः कामकाञ्चनरहिता भक्ता आगमिष्यन्ति। तान् भक्तान् उपदिश्य स्वधाम उपैष्यसि।

ते तु त्वया उपदिष्टानि अमृतवाक्यानि उदाराम् अच्छेद्यकीर्ति ज्ञानभक्तिप्रेमसमन्वयवार्तां प्रचारयिष्यन्ति, यानि ध्यायन्तस्तरिष्यन्ति भवाब्धिमचिरान्मानवाः । अथ कियत्-कालानन्तरं द्व्यशीत्यधिकाष्टादशशततमखृष्टाब्दात् परतः सर्वे भक्ताः समागताः । तेषूपदेशः प्रोक्तस्तेन ।

न हि केनापि ईश्वरस्य अनन्तस्य अनन्तगुणा व्याख्यातुं शक्याः । यथा परमाणूनां परिगणनं सागरसलिलानाञ्च कुशाग्रेण सेकसाधनेन परिशोषणञ्च कदापि कथमपि नैव शक्यम् ।

ततश्च गृहस्थान् प्रत्युक्तं तेन । कुरु-कर्माणि सर्वाणि सर्वकालमीश्वरे परमात्मनि मनः स्थापयित्वा । ज़ानीहि संसारमसारं क्षणभङ्गुरञ्च । जायापत्यगृहक्षेत्रद्रविणादिषु ममत्वाभिमानं परित्यज्याविशेषेण प्राणिनो नारायणबुद्ध्या सेवस्व तस्यैव चापर उपदेशो यथा—

त्यागं विना ईश्वरलाभो न सम्भवति । ये तु त्यागिनस्तेषामुपदेशं सर्वे गृह्णन्ति, न तु भोगिनाम् । यथा गीता गीता इत्यसकृदुच्चारितं सत् तागी त्यागी वा भवति हे जीवाः! सर्वान् विषयान् परित्यज्य भजत ईश्वरम् इति गीतायाः सारः। यथा च"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।" येषां सत्ये दृढा निष्ठा अस्ति ते ईश्वरं प्राप्नुवन्ति । यद्यपि एतानि दुष्कराणि-

तथापि साधुसङ्गे सर्वाणि सुलभानि भवन्ति । यथा चोक्तं "क्षणमिह सज्जनसङ्गतिरेका, भवति भवार्णवतरणे नौका ।"

"जाड्यं धियो हरति सिञ्चति वाचि सत्यं चित्तोन्नतिं दिशति पापमपाकरोति । चेतः प्रसादयति दिक्षु तनोति कीर्तिं सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥" इति

यदा यस्य सत्सङ्गो न भवेत् तदा स एकान्ते क्वचिदवसरे ईश्वरं भजेत् । एवं पुनः पुनः कृते चित्तस्था अविद्या नश्यति, ईश्वरे परानुरक्तिः स्वयमुदेति । यदा बहुजन्मसमर्जितभाग्योदयेन वासुदेवं नारायणं प्राप्तुं चातक इव व्याकुलतां गच्छेत्, तदा जानीहि ईश्वर-लाभोऽतिसन्निकट एवेति । यथा अरुणोदये सूर्योदयो भविष्यति तूर्णमिति निश्चीयते, तथा व्याकुलतोदयेन ज्ञाना-र्कोदयो भविष्यत्यचिरादिति निश्चयः, उक्तञ्च, भवन्तु साकार-वादिनो निराकारवादिनो वा, ये विभिन्नाः सम्प्रदायाः सन्ति ते त्यजन्तु साधनवर्त्मनि परस्परं कलहं विद्वेषञ्च गृह्णन्तु ईश्वरे अनुरागं व्याकुलताञ्च । एवं कृते किंस्वरूपं ब्रह्म क ईश्वर इत्यादि-प्रश्नानां नावकाश इति । ऐशी व्याकुलता क्रमेण तत्त्वं प्रकाशयति । त्यागिन ईश्वरे अहैतुकीं भक्तिं कुर्वन्त आत्मारामाः सन्तो विचरन्ति भुवि । प्रथितयशसः श्रीरामकृष्णपरमहंसदेवस्य अतीन्द्रियाचिन्त्या-लौकिकसात्त्विकदैवप्रभावेण परिव्याप्तं जगत् । तस्य गुण-गणा न केनाप्यज्ञाताः परं सर्वैर्विदिता इत्यलमत्र विशेषेण वाचां प्रपञ्चनेन । इति-जगन्नाथानन्द-पुरी



শ্রীমহেন্দ্র নাথ গুপ্ত

( শ্রীম )

জন্ম ১২২৬, ৩১শে আষাঢ় শুক্রবার। শ্রীঠাকুরকে প্রথম দর্শন—১৮৮২, ফেব্রুয়ারী। শ্রীঠাকুরের সঙ্গে—১৮৮২ হইতে ১৮৮৬ আগষ্ট। শ্রীশ্রীরামকৃষ্ণ কথামৃত ৫ ভাগ ও Gospel of Sri Ramakrishna এর লেখক। দেহত্যাগ—২১শে জ্যৈষ্ঠ ১৩৩৯ ( ৪ঠা জুন, ১৯৩২ ), শনিবার, ফলহারিণী অমাবস্যা তিথি।

# श्रीरामकृष्णकथामृतम्

## प्रथम कथा (१)

अध्यापकस्य प्रथमं परमहंसदेवस्य दर्शनम् ।

दक्षिणेश्वरनामकग्रामस्यानतिदूरे जाह्नवीपुलिने काली-मन्दिरमवस्थितम् । तत्र द्व्यशीत्यधिकाष्टादशशततमे खीष्टाब्दे १८८२ (मार्च्चमासे) फाल्गुने मासि सन्ध्यायाः किञ्चित् पूर्वं स्वगृहे भूमावुपविष्टैर्भक्तवर्गैः परिवेष्टितः श्रीरामकृष्णपरमहंसदेवः स्मितवदनः पूर्वाभिमुखः खट्वाया-मुपविष्टः सन् अच्युतोदारकीर्तिं वाचमुपदिशन्नास्त ।

तदा अध्यापक (कथामृतप्रणेता) आगत्य गृहस्य द्वारि-चित्रलिखितइव निश्चलः सर्वमिदमपश्यत् । भागवतस्य वक्ता-शुकदेव इव सर्वतीर्थसम्भार इव अथवा श्रीक्षेत्रे रामानन्द-स्वरूपादिभक्तपरिवृतः श्रीचैतन्य इव श्रीरामकृष्णपरमहंस-देवो हरिकथां कथयतीति तदानीं तस्य बोधः संजातः ।

---

[१]कथानाम नाना वक्तृकः पूर्वोत्तरपद प्रतिपादको वाक्य सन्दर्भः

तेन तत्र श्रुतः परमहंसदेवोक्तं तत्त्ववाक्यं यत्, यदि कोऽपि सकृत् हरिरिति नामतो राम इत्युक्तितो वा रोमाञ्चदेहः प्रेमाश्रुनेत्रश्च भवति, तदा तस्य सन्ध्यावन्दनादिकं कर्म स्वयमेव लयं यातीति ज्ञानीहि । स च क्षीयमाणकर्मबन्धनः कर्मसन्न्यासेषु भवत्यधिकारी । तस्यामवस्थायां स हरिरिति राम इति वा प्रणवादिकं वा जपन् संसिध्येत् । तदा सन्ध्योपासनादिकं लयं गच्छति, गायत्री प्रणवे विलयं याति ।

सोऽयमध्यापको भागिनेयेन सिद्धेश्वरनामकेन पुरुषेण सार्द्धं वराहनगरस्य रमणीयेषूद्यानेषु परिभ्रमन् तन्मुखाज्जाह्नवीपुलिनशोभनोद्यानसन्निहितकालीमन्दिरनिवासी कश्चित् परमहंसदेवोऽस्तीति श्रुत्वा रविवासरेऽवसरं प्राप्य-तं द्रष्टुमागतः । प्रविश्य चोद्यानं सर्वमिदं दृष्ट्वा मनसा अचिन्तयत्, "अहो आश्चर्यमिदम्, परमरमणीयं स्थानम् ! सुन्दरा मनुजाः ! मन्दं मन्दं प्रवहति वसन्तानिलः ! कारमणीया कथा ! अतः पदमेकं न चलतो मम चरणौ स्थानान्तरं यातुम् । तत्तथा भवतु, अद्य खलु वारमेकं सर्वं निरीक्ष्य प्रत्यावृत्य पुनरप्यत्रागत्य आकर्णयिष्ये कलिमलहारिणीं हरिकथा"मिति । इत्थं विचिन्त्य श्रीरामकृष्णस्य पूर्वोक्तं कथामृतं श्रुत्वा सन्ध्यागतेति द्वादश शिवमन्दिरेषु राधाकृष्ण-कालीमन्दिरयोश्च मधुर-घण्टानिनाद-संवृद्धमारात्रिकादिकं पश्यन् पुनरपि परमहंसदेवस्य गृहमागतः । तत्र

धूपादिपूर्णस्य गृहस्य द्वारं पिहितं पश्यन् द्वारदेशे दण्डायमानां वृन्दानाम्नीं परिचारिकां पप्रच्छ ।

अध्यापकः- अये, स साधुः (परमहंसदेवः) अधुनात्र गृहे वर्त्तते न वा ?

वृन्दाः- एवम्, गृहमध्ये वर्त्तते ।

अध्यापकः- कियन्तं कालमत्र विद्यते ?

वृन्दाः- बहुदिनमत्र निवसति ।

अध्यापकः- तेन बहूनि शास्त्राण्यधीतानि न वा ?

वृन्दाः- आस्ताताः ! सर्वाणि शास्त्रण्यनधीतान्यपि-तज्जिह्वाग्रे तिष्ठन्ति ।

अध्यापकोऽनधीतशास्त्रः श्रीरामकृष्णपरमहंसदेव इति श्रुत्वा विस्मयं लेभे ।

अध्यापकः पुनरप्याह— सः (परमहंसदेवः) अधुना किं सध्यावन्दनादिकं करोति? गृहं प्रवेष्टुं शक्यते न वा? किमस्माकमागमनं भवती ज्ञापयिष्यति ?

वृन्दाः- ताताः ! गच्छन्तु भवन्तो मन्दिरमिदम् ।

तद् वाक्यं श्रुत्वा गृहं प्रविश्य खट्वायामुपविष्टं भावमग्नमेकाकिनं श्रीरामकृष्णमपश्यत् । ततोऽध्यापकः पाश्चात्य-रीत्या कृताञ्जलिः सन् प्रणनाम । भगवतः श्रीरामकृष्णस्यानुज्ञां प्राप्य सिधुना सह भूमावासनमधिगतः ।

ततश्च परमहंसदेवोऽध्यापकं पृच्छतिस्म क्रमेण;कुत्र तिष्ठसि? किं करोषि ? किमर्थं वराहनगरमागतोऽसि ? अध्यापकस्तत्प्रश्नस्य सर्वस्योत्तराणि प्रोवाच । किन्तु-अध्यापक-उपलेभे यदयं श्रीरामकृष्णः कथां ब्रुवन्नन्तरान्तरा उन्मना भवति कथासु, ध्रुवमन्यत्राकृष्टमस्य मानसं कां गतिमेति ! किमु समाधिम् ? यथा मत्स्यार्थी मत्स्याकर्षणदण्डसूत्रादिकं यथोचितं स्थापयन् सूत्रसञ्चारसूचकं तृणखण्डं घडिशन्यस्त-भक्ष्यग्राहिणा मत्स्येन चालितं विज्ञातुं तत्र तृणखण्डे न्यस्त-दृष्टिस्तादृशदण्डहस्तो व्यापारान्तरमुक्तचित्तः परालापादि-वर्जितः काञ्चिदवस्थामभिनवामेति । तथावस्थः कश्चन सर्वेन्द्रियव्यापारविरतौ जायमानमानसो धर्मविशेष एष भावाख्यो भवति परमहंसदेवस्य सन्ध्यासमये इति पश्चात् ज्ञातं तेन ।

अध्यापकः- अधुना भवतां सन्ध्यावन्धनादिकं कर्म सम्भाव्यत इति गच्छामः ।

रामकृष्णः- (भावपूर्णमानसः) न तावत् सन्ध्यादिकमेव सर्वाधिकं किञ्चत् । तौ तु अन्यत् किमपि वार्त्तालापादिकं कृत्वा तं प्रणम्य गतवन्तौ । प्रणामसमये परमहंसदेवोऽवदत् अध्यापकं पुनरप्यागच्छेति ।

प्रथमा कथा

गच्छन् पथ्यचिन्तयत् अध्यापकः, कोऽयम् सौम्यपुरुषः! येन सकृद्दर्शनेन पुनरप्यागन्तुं प्रवृत्तिमानस्मि। अपि च महदाश्चर्य्यमेतत्, अयमशास्त्रज्ञोऽपि महान् भवितुमर्हति किम्? मामागच्छेति पुनरप्याह स देवः। श्वोऽथवा तत्-परेद्युरागमिष्यामीति समुदेति ममेच्छा।

द्वितीय दर्शने गुरुशिष्ययोः संवादः

अध्यापकस्य द्वितीयदर्शनं प्रातरष्टमघटिकायामल्प-शीतोपलक्षितायाम्। क्षौमशीतवस्त्रं दधानो धृतोपानत्कः स्मितमुखचन्द्रः क्षौरं कारयितुमिच्छुकः श्रीरामकृष्णो दक्षिणपूर्वदिगवस्थिते अलिन्दे उपविष्ट आसीत्। तत्र नापितोऽपि समुपस्थितः। तदागच्छन्तमध्यापकं दृष्ट्वा अस्फुटवाचमिव श्रीरामकृष्णः प्रोवाच। त्वमागतोऽसि? भद्रमेतत्। अत्रोपविश। अये! कुत्र तव वासः?

अध्यापकः- ससम्भ्रमनमाह, कलिकतानगरीमधितिष्ठामि।

श्रीरामकृष्णः- इह कुत्र समागतोऽसि?

अध्यापकः- अत्र वराहनगरे भगिनीपतेः श्रीमदीशानक-विराजस्य भवनमागतोऽस्मि।

श्रीरामकृष्णः- अहो! ईशानस्य गृहे! (मम परिचितः स इत्यभिप्रायः)

श्रीरामकृष्णः- तात ! केशवचन्द्रस्यासुस्थतासीत् । अधुना स कीदृशोऽस्ति किमिति ज्ञायते श्रीमता ?

अध्यापकः- श्रुतं पीडित आसीदिति, अधुना सुस्थ इति सम्भाव्यते ।

श्रीरामकृष्णः- शेषरात्रौ सुप्तोत्थितः सन् रुद्रपरिपक्व नारिकेलशर्करे देव्यै दित्सुरयाचे, हे मातः, केशवं नीरोगं कुरु । केशवाभावे कलिकता इति नगरं गत्वा केन सह सम्वादं करिष्यामि ?

तात ! किमु ज्ञायते त्वया नगर्य्यामिह व्याख्यानकुशलः कश्चित् कुक साहेवो नाम ? एकदा केशवचन्द्रो मां निनायार्णवपोतं, तदा स साहेवस्तत्रासीत् ।

अध्यापकः- ससम्मानमाह, एवमसौ समागत इति श्रूयते, किन्तु तस्य व्याख्यानं न श्रुतम् । न च तस्य विशेषो विज्ञायते ।

श्रीरामकृष्णः- एकदा कर्मविरहितः प्रतापभ्रातात्रागत्य कतिपयदिनान्यासीत् । श्रुतं मया, स पुत्रकलत्रादिकं श्वशुरगृहे निधायेतस्ततः परिभ्रमति । एतदभिलक्ष्य तिरस्कुर्वन्नवदम्, किं तव त्रपा नास्ति ? वर्त्तमानेऽपि त्वयि श्वशुरालयस्थं स्त्रीपुत्रादिकमपरे परिपालयन्ति ? एतत् किं शोभनं ते ? तव पौरुषं नियोजयन् कर्मादिकमन्वेषय । मय्येवमुक्तवति स इतो गतः ।

## प्रथमा कथा

श्रीरामकृष्ण:- (अध्यापकं प्रति) किमुद्वाहः कृतस्त्वया ?

अध्यापकः- एवं कृतो मया दारपरिग्रहः ।

श्रीरामकृष्ण:- (सचकितः सन्) रे * रामलाल, आः परिणीत एषः ।

अध्यापकस्तदाकर्ण्य कृतदुरितइव विनतमौलिरनुक्तवचनो मनसि चिन्तयामास—अहो ! परिणयः प्रचुरदोषावहः किमु ? श्रीरामकृष्णः पुनरपि पृच्छति, तव किं पुत्रो जातः ?

अध्यापकः सन्त्रस्यन् वेपमानश्च प्राह, एवम् सञ्जातः पुत्रकः । श्रीरामकृष्णः पुनरप्याक्षिपन् भाषते, आः ! पुत्रोऽपि जातः ! इत्थञ्च तिरस्कृतो हृतदर्पःसन्नध्यापक इति—कर्त्तव्यतामूढ इव मौनी बभूव ।

कियत्क्षणानन्तरं श्रीरामकृष्णोऽनुकम्पयन् सस्नेहो मधुरया गिराकथयत्, तात ! तव सुष्ठु धर्मलक्षणं विद्यते, यस्य कस्यचित् नेत्रललाटादिकं दृष्ट्वा अयं सुपुरुषः कुपुरुषो-वेति मया ज्ञातुं शक्यते । तत्तथा भवतु, किदृशी तव भार्या ? विद्यारूपिण्यविद्यारूपिणी वा ?

अध्यापकः- ससम्मानमाह, शोभना सा न पुनरधि-गतज्ञाना ।

* श्रीमान रामलालः श्रीरामकृष्णस्य भ्रातुष्पुत्रः कालिका-देव्याः पूजकः

श्रीरामकृष्णः- [अपरितोषं सूचयन्] किमु त्वमसि लब्धबोधः ?

एतावत्कालं पुस्तकपाठलेखतदर्थबोधमात्रं'ज्ञानपदवाच्य-मित्यविददध्यापकः । यथार्थतस्तु ईश्वरसाक्षात्कार-तद-भावौ क्रमेण ज्ञानाज्ञानपदवाच्यौ भवत इति तु पश्चात् परम-हंसदेवमुखात् विवेद ।

श्रीरामकृष्णः किं साकारे निराकारे वा परमात्मनि तव श्रद्धा जायते ? एकस्यैव तत्त्वस्य साकारता निराकारता चैकदा सम्भवतः किम् ! नहि धवलदुग्धं कृष्णं भवति । सगुण एवेश्वर इति श्रद्धावतः स एव निर्गुण इति विश्वासः कथं भवेत्, परस्परं विरुद्धाविति विभाव्याकुलीभूतोऽध्यापकः ।

अध्यापकः- ससम्मानमाह, निराकार एव मह्यं रोचते ।

श्रीरामकृष्णः- भद्रमेतत्, एकस्यैकस्मिन्नेव निष्ठा विधेया । परन्तु इदमेव सत्यं नापरः साकार इति मतिं मा कुर्याः । निराकार इव साकारोऽपि सत्यः परमेश्वरः । तयोर्मध्ये स्वप्रवृत्त्यनुरूपमन्यतरमुपास्व । तन्मुखादसकृत् द्वयोरपि याथार्थ्यमिति श्रुत्वा अध्यापको विस्मितो बभूव । तदधिगतेषु शास्त्रेषु नास्ति एवं युक्ति—र्नैवाधिगता तादृशी कथा कदापि तेन । अध्यापकस्यैतावता तृतीया इति दर्पहानिरजनि । तथाप्यलुप्ता तर्कमतिरिति

पृच्छति पुनरध्यापकः। एवमस्तु, सगुण इत्येवास्तु, तथापि मृत्प्रतिमा नामेश्वर इत्ययुक्तमेवभाति ।

श्रीरामकृष्ण: – चिन्मयी सा कथं मृत्प्रतिमा नाम !

अध्यापकश्चिन्मयी प्रतिमेति श्रुत्वापि वाक्यार्थं न विदेद।

अध्यापकः—तथैवास्तु, ये तु मृन्मूर्त्तिमुपासते, ते तस्यामीश्वरधिया तामाराधयन्तु ।

श्रीरामकृष्णः—(वैक्लव्यं सूचयन्) कलिकातावासिनामियं रीतिर्यन्निजव्याख्यानकौशलं केवलमपरेषां प्रबोधनार्थमिति । परन्तु स्वात्मानं को ज्ञापयिष्यतीत्यत्र नास्ति निश्चयः कोऽपि। अपिच कस्त्वम् ? ज्ञापयिता भवितुमिच्छसि ? येनेदं जगत् सृष्टं, येन सूर्य्याचन्द्रमसौ मनुष्यादिजीवजातं निर्मितानि, येन विविधप्राणिनां निवासग्रासाच्छादनार्थं बहुविधानि द्रव्याणि विहितानि, येन परिपालनार्थं पितृभ्यां स्नेहो दत्तः, येन एतानि पालनरक्षणोपायभूतानि कृतानि, स किं विधेयं किमपि विधातुमसमर्थः ? यदि प्रयोजनं भवेत् स एव ज्ञापयेत् यत्किञ्चन।

मृदुपासनायां श्रद्धावतामुपासकानां यदि कियान् प्रमादः स्यात् तथापि स सर्वान्तर्य्यामितया तयैवोपासनया प्रीतो भविष्यति। तेन तव का चिन्ता ! यथा तव भक्तिज्ञाने भवेतां तथा यतस्व ।

उक्तोपदेशतोऽध्यापकस्य तस्याभिमानः संहत इति सम्भाव्यते । हतदर्पोऽध्यापको मनसाऽचिन्तयत् भगवता श्रीराम कृष्णेन यदुक्तं तत्सर्वं यथार्थमेव । कोऽहमुपदेष्टु-मिच्छामि ? ईश्वरस्वरूपं ज्ञातं किं मया ? मम तत्पादपद्मे भक्ति र्जाता किं ? तथापि कथमहमपरानुपदेष्टुमीहे ? नैवैतत् शोभनं मे । लोकागाथां गायन्ति, स्वस्य शयनस्थानाभावेऽपि शङ्कर नामानं पुरुषमामन्त्रयति शयनार्थमिति । नायमितिहासो, न वा काव्यं, न च ज्योतिषशास्त्रम्, येनापरान् शिक्षयामि ? अविज्ञातविषयस्य परेषां ज्ञापनं मन्दबुद्धेः पुरुषस्य कर्म भवति । इदन्तु निगूढ़मीश्वरतत्त्वम् । अनेन भगवता यदुक्तं तत्सर्वं मनसि समाहितं मया । भगवता परमहंस देवेन अध्यापकस्यायं—चरमस्तर्कः ।

श्रीरामकृष्णः—मृत् प्रतिमा पूज्यत इति त्वमवादीः । यदि प्रतिकृतिर्मृदस्तथापि तदर्चनायां फलमस्त्येव । विविधाः पूजाः परमेश्वरेण व्यवस्थापिताः । जगदिदं यदीयमर्च्चनावैलक्षण्या-दिकं सर्वं तेनैव विहितमधिकारिभेदात् । यथा पञ्चानां पुत्राणां सवित्री नानाद्रव्यघटितं व्यञ्जनमनेकविधं भोक्तृयोग्यतामधि-कृत्य निर्माति, कस्यापि कृते सूपं, तथाम्लघटित व्यञ्जनमन्यार्थं,

तथापरस्तुतार्थं सोपकरणमपि निर्ज्जलं, (चच्चडिइतिभाषा प्रसिद्धम्) सुतान्तरार्थन्तु भर्ज्जितमात्रं, भोगसामर्थ्यमधिकृत्य यथारुचि तेषां प्रयोगः, एवमेवार्च्चनाविधौ । किमेवमवगच्छसि ?

अध्यापकः—ससम्मानमाह, एवमवगच्छामि साम्प्रतं भवदीयोपदेशप्रसादात्। (विनीतः सन्) केनोपायेनेश्वरे मनः स्थैर्य्यं लभते ?

श्रीरामकृष्णः— ईश्वरगुणनामानि गायन् सद्भिर्भक्तैश्च सहान्तरान्तरा मिलनं कुर्वन् क्रमेण विरक्तो जनश्चित्तस्य स्थैर्य्यं साधयितुमर्हति । विषयकर्मणि संसारे च यस्य मनोऽहर्निशं संसक्तं स्यात् तस्य मनः परमात्मनि समाहितं न भवेत् । तस्मात् प्रथमावस्थायां संसारकोलाहलमपहाय मनोऽनुकूले निर्ज्जने स्थाने परमात्मा चिन्तनीयः । निर्जनं स्थानं विना मनःसमाधानमतीव कठिनम् ।

"यदा वृक्षस्य गुल्मावस्था तदा ततः समन्ततो वृतिं परिदधाति जनः । अन्यथा वृतिं विना तं पशवः खादेयुः । मनसि, गृहस्य प्रकोष्ठे, वने वा, ध्यानं विधेयम् । अपिच सत्यएवेश्वरोऽन्यच्च सर्वमनित्यमित्येवं विवेकबुध्यान्तःकरणनिहिता-नित्याविद्यादीनां क्षयः करणीयः ।

अध्यापकः— (विनीतः सन्) केन प्रकारेण संसारे स्थातव्यम् ?

श्रीरामकृष्णः—स्वजनपुत्रकलत्रपरिवृतोऽपि त्वं धनिगृहे दासीवदीश्वरे मनो निवेश्य कर्त्तव्यकर्माणि कुरु । नहि ममात्मीयाः संसारिणः केचन ईश्वर एव मम सर्वस्वमिति मनसि चिन्तय। यथा दासी स्वदेश मनो निधाय धनिगृहे निजोचितानि सर्वाणि कर्माणि करोति । सा तु नात्मीया ममैते ज्ञानानापि, स्वपुत्रवत् धनिपुत्रादिकं समाहृत्य वदति, ममायं रामः, ममायं हरिरिति ।

"यथाच कूर्मो जले विचरन्नपि यत्राण्डानि तत्रैव मनो निदधाति, तथा संसारे कर्त्तव्यानि कर्माणि कुर्वतापीश्वरे मनः समाहितव्यम् ।

"भक्तिप्रिये माधवे भक्तिं विना संसारे यदि निवसेत्, त्रितापाभिभूतःसन् च्युतधैर्यो भवेत्। यथा यथा विषयचिन्ता प्रवर्द्धते तथा भवति कामस्य वृद्धिः ।

"किञ्च पाणौ तैलं लिप्त्वा पनसान् भिन्द्याज्जन इति नियमः । अन्यथा तैलं विना क्षीरसिक्थेन लेपो भवत्यवश्यमिति प्रसिद्धा वार्त्ता। तथैव तैलरूपां भक्तिं लब्ध्वा सांसारिकं कर्म कर्त्तव्यं येन न संसारे लेपो भवेत्

"किन्तु भक्तिलाभो निर्ज्जनं स्थानमपेक्षते, यथा दध्न: नवनीततताप्तये दध्न: स्थिरतावश्यकी, अन्यथा इतस्तत: परिचालनेन दधि स्थिरं न भवति। ततो न नवनीतसंग्रह:। अपि विजने स्थाने उपविश्य अन्यकर्माणि त्यक्त्वा दधि मथ्नीयात् चेत् ततो नवनीतं लभेत।

"तथैव रहसि भक्तेन विचिन्त्यमाने परमात्मनि ज्ञान-वैराग्यभक्त्यादिकमुदेति । किन्तु सांसारिककर्मणि मनसि लग्ने कामिनीकाञ्चनाभ्यामाबद्धं सत्, तदेव मनोऽधोऽधो गच्छति। जलतुल्य: संसार: दुग्धोपमं मन: । जले पयइव संसारे मनो लग्नं सदेकीभूतं स्यात्, तेन च विवेचनमशक्यम्-भवेत्। दुग्धपरिणामभूतस्य दध्नो नवनीतमादाय यदि तज्जले स्थाप्यते, तर्हि ज़लोपरि प्लवते। नतु निमज्जति। तथा एकान्ते प्रथमत: साधनेन नवनीतसदृशे ज्ञानभक्तिरूपे लब्ध्वा जल-तुल्ये संसारे विद्यमानोऽपि साधको नैव संसक्त: स्यात्, तत्र निर्लिप्त: सन् विराजते।

"किञ्च उपासनाङ्गतयात्मानात्मनौ विवेच्यौ: । यथा सत्य एवेश्वर:। कामिनीकाञ्चनादिकञ्चानित्यमिति।

"काञ्चनेन मुद्रया वा किं प्रयोज़नं साधितं स्यात् जनानाम् ? तेन वित्तेन देहधारणोपायान्नवस्त्रावासस्थानादिकं

स्यात् । एतावान् हि तदुपयोगः । नहि तेन आत्मा लभ्यो भवेत् ।

अध्यापकः—ससम्मानमाह, मया प्रबोध चन्द्रोदय नामकं नाट्यपुस्तकं साम्प्रतं पठितं तत्रैवमुक्तं वस्तुविवेचनं नाम विचारः ।

श्रीरामकृष्णः— एवं वस्तु विचारः । अपि च पश्येद-मस्मिन् सुन्दर देहे वित्ते च विचारतो नास्ति कश्चन सारः । परमसुन्दरस्त्री देहे चास्थि मांसमेदोमज्जमलमूत्र पुरीषादि-मात्रमस्ति मलिनं वस्तु, नास्ति तु सारलेश इति विचारणीयम् किमिति परमार्थभूतमीश्वरं विहाय तत् विस्मृत्य चास्मिन्न नित्य वस्तुनि निमज्जन्ति मनुष्याः ?

अध्यापकः- ईश्वरसाक्षात्कारो घटते न वा ?

श्रीरामकृष्णः-अवश्यमेव घटते । अन्तरान्तरा निर्ज्जन स्थाने वासो विधेयः । तत्रेश्वर गुण नामानि तल्लाभोपायभूतानि तत्त्व-चिन्तनानि कर्त्तव्यानि ।

अध्यापकः- कदा कया रीत्या भवतीश्वरः प्रत्यक्ष विषयः ?

श्रीरामकृष्णः- भक्तो हि परम व्याकुलित चेतसा क्रन्दनेन चेश्वरं प्रत्यक्षं प्राप्तुमर्हति । स्त्रीपुत्र द्रविणार्थं घटपरिमित मश्रुजातं प्रवहति, के वा ईश्वरार्थं क्रन्दन्ति यतन्ते च ?

भगवाननन्यमनसा चिन्तनीयः । एतदुक्त्वा गायतिस्म देवः परमहंसः ।

आवाहय मनः श्यामां सम्पूर्य्यावाहन क्रियाम्।
यदि पूर्णा तवाकाङ्क्षा तूर्णमेष्यति कालिका॥
स भक्ति चन्दन ज़वा विल्वपत्राणि हस्तयोः।
समर्पय पदाब्जाभ्यामेकाग्र' चेदनेकशः॥

गानानन्तरं, यथारुणोदयानन्तरं सूर्य्यो लोकदृष्टिमुपैति, तथातिव्याकुलतायां जातायां सत्यामीश्वरसाक्षात्कारो घटते।

"प्रसिद्धस्त्रिविधो विषयानुरागः। यथा विषयिणामनुरागो विषयेषु, यथा च मातृणामनुरागः सन्तानेषु, यथा पतिव्रतानां प्रीतिः पत्यौ च भवति तथा यद्येकस्य जनस्य कदाचित्त्रयः समुदितानुरागा ईश्वरे भवेयु, तर्हि तेनानुरागबलेन स समर्थो द्रष्टुमीश्वरम्। अस्य वाक्यस्य तात्पर्य्यार्थस्तु परमात्मनि प्रीतिः कर्त्तव्येति।

"व्याकुलितात्मा सन् मुहुर्मुहुस्तं देवं चिन्तयेत् यथा मार्ज्जारशावको मियु मियु इति शब्दायमानो मातरं दुःख ज्ञापयति मातापि त' शब्दं श्रुत्वा आगत्य तं गृहीत्वा यथा यथा स्थापयति तथैव तिष्ठति सः सा कदा महानसे, कदा-भूम्युपरि, कदावा शय्ययामङ्कगतं करोति तम् स दुःख-ज्ञापकं मियु मियु इति रवं विनान्यत् किमपि न जानाति शिशु-मार्ज्जारस्य।

अध्यापकस्य तृतीयं परमहंसदेवस्य दर्शनम् ।

अध्यापकस्तदा वराहनगरे भगिनीगृहे अवस्थितः । आदर्शनात् योगेश्वरं श्रीरामकृष्णं चिन्तयन् तन्मयतां गतः । स च तन्मयता वशात् प्रेमविलोललोचनं आनन्दघनमूर्तिं श्रीरामकृष्णं पश्यन् तन्मुखपद्मनिःसृतममृतमयमाकर्णयन्निव कालं निनाय ।

अपिचामृशत् कोऽयं दरिद्रब्राह्मणः ! कथम्वा तेनाञ्जसा सूक्ष्मात् सूक्ष्मतरं परमगहनमध्यात्मतत्वं समधिगतम् ! आजन्मन एवम्विधाश्चर्य्यवक्ता कुशलार्थज्ञापयिता न दृष्टो मया । कदा गमिष्यामि,कदा वा पुनरपि द्रक्ष्यामि भगवन्तमिति चिचिन्तयन् रविवारप्राप्तौ पराह्णे तृतीयघटिका-चतुर्थघटिकाभ्यन्तरे बावुनेपालेन सार्द्ध तृतीयवार दक्षिणेश्वरोद्यानमाजगामाध्यापकः ।

तत्र रविवारतयावसरप्राप्तदेवदर्शनोत्सुकैः समागतैर्भक्तैः परिपूर्णे गृहे क्षुद्रखट्वायामुपविष्टं हास्याननमच्युतोदार कथां व्रुवन्तं देवं परमहंसं दृष्ट्वा अध्यापकस्तत्रत्येषु जनेष्वपरिचित इति तद्गृहे कस्मिंश्चित् प्रान्ते आसने उपविवेश ।

किञ्च—तत्र परमहंसदेव ऊनविंशवर्षवयस्कं युवानमालक्ष्य परमानन्दप्लुतः सन् तेनैव सहालापं विदधे । यूनस्तस्य नरेन्द्र इति नामासीत् । स नरेन्द्र उज्ज्वलनेत्रस्तेजः पूर्ण वाक्यो-

विद्यालये (कलेजे) पठन् ब्राह्मसमाजं गच्छन् भक्तइव भातिस्म । परिचयस्तस्य कथान्तरेणागतोऽध्यापकेन । परमहंसदेवस्य तदा संसारिजनाश्रिता कथा प्रचलति स्म ।

"संसारे दुर्ज्जना बहवः सन्ति, ते तु ईश्वरचिन्तारतान् धर्मानुष्ठानपरान् निन्दन्ति । तैर्दुर्ज्जनैः सह कीदृशमाचरणं विधेयमित्येवं वस्तु निर्दिशतिस्म तत्र भगवान् श्रीरामकृष्ण इति।

श्रीरामकृष्णः— [नरेन्द्रं प्रति] तात नरेन्द्र, तव किमभिमतम् ? विषयासक्तालोका बह्वन्यवाच्यानि निरर्थकानि वाक्यानि वदन्ति । किन्तु तात, यदा मातङ्गःपथि गच्छति तदा तत्पश्चात्तं निरीक्ष्य जन्तवो भीताः सन्तो विविधान् शब्दान् कुर्वन्ति । परन्तु स तान्नावलोकयति । यदि कश्चित् त्वां निन्द्यात् तेन त्वं किं मन्यसे ?

नरेन्द्रः—अहं मन्ये श्वान इवानेकधा ते तारं रुवन्ति ।

श्रीरामकृष्णः—अये, न तावती मानसी क्रिया युक्ता । (सर्वेषां हास्यम्) । ईश्वरः सर्वभूतेषु विद्यते । [तस्मात् सम्मानार्हाः सर्वे] किन्तु सद्भिर्मिलनमत्यन्तं युज्यते । असद्भिस्तु दूरावस्थानमुचितम् । क्रूरशार्दूलेऽपि नारायणो वर्त्तते, किं तेन सार्द्धं मेलनमुचितम् ? [सर्वेषां हास्यम्] यद्युच्येत

व्याघ्रोऽपि नारायणः कथं तस्मात् पलाये ? तत् समाधानन्तु यैरुच्यते ततः पलायनमुचितम् तदुपदेशं कथं न शृणुयाम् । यतस्तेऽपि वक्तारो नारायणा एव।

"श्रूयताम् गाथा—कस्मिंश्चिद्वने शिष्यपरिवृत एकः सन्यासी निवसति स । स च शिष्यानुपदिदेश, सर्वभूतेषु नारायणो विराजते इति मत्वा यूयं सर्वान् प्रणमत। ऐकदा यज्ञकाष्ठाहरणाय तेषां कश्चित् वनं गतः । तदा तत्र हस्तिपकेन मत्तमातङ्गोऽयम् मत्तमातङ्गोऽयं, अस्मान्मार्गात् दूरमपसरन्तु, दूरमपसरन्तु जनाइति शब्देन वार्य्यमाणास्तत्रत्याः सर्वे पलायिताः। परन्तु हस्तिनं नारायणं मत्वा स शिष्यो नैवापससार । अपितु स पथि दण्डायमानस्तं प्रणम्य तुष्टाव । स च क्रोधेन शुण्डेन तमादाय पथ्युत्क्षिप्य गतः । तेन शिष्यो हतसंज्ञः क्षताङ्गःसन् भूमावपतत्

तस्य तथावस्थां श्रुत्वा आश्रमात् शिष्यसमावृतो गुरुरागत्य तं गृहीत्वाश्रमं निनाय । तत्रागदपानेन कियत्-क्षणानन्तरं सज्ञांप्राप्तं शिष्यं कश्चिदपृच्छत् । उन्मत्त कुञ्जरोऽयमिति श्रुत्वापि कथं नापसृतवांस्त्वम् ? इति स तदुत्तरेणाह-नारायण एव मनुष्यजीवजन्तुरूपेण प्रकाशते इति गुरुर्मामुप-

दिदेश, तेन वारणं नारायणं ज्ञात्वा नैव पलायितवान् तदोवाच गुरुस्तात, यदि सर्वे नारायणाःस्युः सर्वान्तर्गतो हस्तिपकोऽपि नारायणो भवेत्, तेन निवारितस्त्वम्। कुतस्तत्र तस्य वाक्ये श्रद्धा न जाता ? हस्तिपकस्य नारायणस्य वाक्यमपि श्रोतव्यं त्वया। (सर्वेषां हास्यम्)

"अन्यच्च शास्त्रेषूक्तं 'आपो वै नारायणः'। किन्तु सर्वा आपः समा अपि सर्वव्यवहारेषु न योग्याः। किञ्चित् जलं देवसेवार्थं व्यवहार्यं, किञ्चित् जलं पानार्थं, किञ्चित् जलं कांस्यादि पात्र वस्त्रादि प्रक्षालनार्थं व्यवहार्य्यम्। न हि रथ्योदकेन पूजनपानादीनां सम्भवोऽस्ति। न ह्येकेन जलेन विभिन्नव्यवहार निष्पत्तिः स्यात्।

"तथैव भक्ताभक्तानां हृदये नारायणो वसन्नप्यभक्त-दुष्टादिना सह मेलनादि व्यवहारो नैव युज्यते।

"केनापि संलापः केनापि सार्द्धं सोऽपि नैव युज्यते। दुर्ज्जनेभ्यो दूरापसरण विधेयम्।

कश्चन भक्तः— महात्मन्, यदि दुर्ज्जना अहितकरणाय द्रोहाचरणं कुर्य्युरथवा कर्त्तुमागच्छेयुस्तर्हि किं तूष्णीं स्थास्यामि ?

श्रीरामकृष्ण:– लोकान्तर्वसत्यनुरोधात् दुर्ज्जनेभ्यस्त्राणार्थं कियान् तमोगुणः प्रदर्शनीयः। परन्तु परानिष्टकारिणस्ते इति निश्चयेन तेषामनिष्टाचरणमनुचितम्।

"कस्मिंश्चिद् गोष्ठे गोचारका गोपबालका आसन्। तत्र प्रान्तरे कोऽपि कृष्णसर्पो निवसतिस्म। सर्पभयात् तत्र गोचारका शङ्काकुला विचरन्ति स्म। एकदा कश्चन ब्रह्मचारिण तेन पथा गच्छ तं दृष्ट्वा सचकिता गोपबालकास्त विज्ञपयामासुः। हे महात्मन्, मा तावदनेन पथा गच्छ। अत्रानतिदूरे कृष्णसर्पो वर्तते। तच्छ्रुत्वा ब्रह्मचार्य्युवाच। तात, भवतु तत्र कृष्ण सर्पः। मम तु तस्मात् भयं नास्ति। मन्त्रविदहम्। एवमुक्त्वा ब्रह्मचारी तं पन्थानं जग्राह तेन सार्द्धं भीता गोचरका न चेरुः।

"ततश्च व्यालो ब्रह्मचारिणं निरीक्ष्यैव फणां विस्तारयन् दष्टुमतिस्तूर्णमाजगाम। किन्तु तं प्रति धावन्तं विषधरं मन्त्रशक्त्या वशीचकार। तया वशीक्रियया चक्री महीलतेव तत्पादयोरधपतत्। तदा तं फणिनमुवाच। अये, त्वं कथं प्राणिनो दशसि? तव हिंसाप्रशमनार्थं मन्त्रं ते दास्यामि अनेन मन्त्रजपेन ते भगवतः प्रेमसमृद्धाद्दर्शनेच्छा घटिष्यते। हिंसा प्रवृत्तिं विहायेमं मन्त्रं जप, कदाचित् मा आक्राम प्राणिन, पुनरप्यागमिष्यामीत्युक्त्वा स साधुः प्रययौ।

अथ कतिपयेषु दिनेषु व्यतीतेषु तं विषधरं शान्तमवलोक्य गोचारका अचिन्तयन्, कथमसौ यथापूर्वं दंष्टुं नागच्छति ? शिलानिक्षेपेणापि महीलतेव किमिति निश्चेष्टस्तिष्ठति । एकदा कश्चित् गोपशिशुस्तं तथाविधं विगतहिंसं समीक्ष्य तस्य पुच्छमादाय तमितस्ततो घूर्णयन् भृशमाहत्य दूरं चिक्षेप । प्रहारविकलेन तेन रुधिरं वमता सम्मूर्च्छितेनेव निश्चेष्टतया स्थितम् । प्रचुरप्रहारेण विगतासुरेष सर्प इति मतिस्तदा सर्पशत्रूणां बालानां बभूव ।

"ततश्च समधिकरात्रौ व्यालश्चेतनामधिगतः शनैः-शनैर्महता दुःखेन परदुर्गमं विवरं नाम वासस्थानं प्रविष्टः। क्रियादिनानन्तरमनशनविकलस्त्वगस्थिशेषो विषधरो भोजनार्थो रात्रौ बहिश्चचार। प्रहाराद् भीतो दिवा विवरस्थएव परं दीक्षाप्राप्तित एव हिंसां जहौ । केवलं तरुविगलित फलपत्र— मृदादि भोजनेन क्षुत्पिपासे वारयामास ।

स ब्रह्मचारी वत्सरान्तरं तत् प्रान्तरमागत्य सर्पमन्वेषयामास । अन्वेषयन्तं ब्रह्मचारिणं गोपबालकाः स सर्पो मृत-इत्यवदन् । परन्तु तेषां वाक्ये तस्य श्रद्धा न जाता । सोऽमन्यत दीक्षितस्य व्यालस्य साधनफललाभं विना देहत्यागो न संभवतीति-एवं विचिन्त्य पुनःपुनरन्वेषयन् स्वप्रदत्तनाम्ना तमाजुहाव

सर्पस्तु गुरोरयं स्वर इति ज्ञात्वा विलान्निसृत्य भक्त्याप्लुतो गुरुं ननाम। तं दृष्ट्वा गुरुरपृच्छत्-कुशलं ते? कथं कृशाङ्गः परिलक्ष्यसे? तदुत्तरेणाह-हे गुरो हिंसां मा कुर्विति भगवतां तत्रभवतामादेशस्ततश्च अहिंसता मया गलितपत्रफलाहारेण रक्षितो देहः कृश इति युक्तमेव। सर्पस्य सत्वगुणोद्रेकात् हिंसावृत्तिर्निवृत्तेति पूर्वं गोपबालकैरनुष्ठितं घूर्णनादिकं देहस्य क्षीणतायां निमित्तमिति विस्मृतं तेन। ब्रह्मचारी प्राह-न हि देहस्य क्षीणत्वे फलादिभक्षणं कारणं भवितुमर्हति। अन्यत् किमपि कारणं विद्यते। स्मरसविस्तरं तस्य। तदाह-अहो! ऐवमन्यत् कारणमस्ति-यत एकदाज्ञानपरवशा गोपबालकाःकस्यचिदहितं नाचरामीत्यजानन्तो मामाजघ्नुः। तद् वचनमाकर्ण्य गुरुराह, आ! एतावत् मन्दबुद्धिस्त्वम्! आत्मानमपि रक्षितुं न जानासि? तत्र दंशनकृत्यं वारितं मया। कमपि विजातीयं रवं (फोस फोस इत्याकारं) कुर्वन् किमिति तेभ्यो भयं न प्रदर्शितवान्! दुर्जनानामनिष्टाचारं वारयितुं विजातीयनादजं भयं प्रकटयितव्यम्। न पुनरनिष्टानुष्ठानं तेभ्यो विषदानं विधेयम्।

श्रीरामकृष्ण:—अपिचेश्वरकृतौ विभिन्ना: सन्ति प्राणवन्तः पादपा लतागुल्मादयो हिता, अहिताश्च, मृगादयो व्याघ्रादयश्च जन्तवः। परं वृक्षेषु सन्ति चूतादयोऽमृतफलाविषफलाश्चान्ये-तथा नरेषु धन्या मन्दाश्च, धार्मिका: पापिनश्च तथा केचन संसारिण: केचन भक्ताः।

"बद्ध-मुमुक्षु मुक्त नित्यभेदेन जीवाश्चतुर्विधाः। यथा नारदादयो नित्यजीवाः। ते तु जीवानां हितार्थमुपदेशार्थञ्च विश्वं विचरन्ति। बद्धजीवास्तु विषयासक्तिवशादीश्वरं विस्मृत्य विषयेषु रमन्ते, नेश्वरं भजन्ति। मुमुक्षुजीवास्तु मोक्षमात्रं—कामयन्ते, तेषु केचन मुक्तिं लभन्ते, केचित्तु केवलं तदुपायमनुवर्तन्ते। ते हि मुक्ता ये कामिनी काञ्चनादिमयं संसारं नानुसरन्ति, परमतीत्य वर्तन्ते, यथा साधवो महात्मान:, येषां मति न विषयेषु केवलं श्रीश्रीहरिचरणसरोजेषु। यथा धीवरा मत्स्यार्थं सरसि जालमुत्क्षिपन्ति। तत्र केचित् मीनास्तथा नैपुण्यवन्तो य कदापि जाले बद्धा न भवन्ति। ते तु मुक्तजीवसदृशा:। प्रायशस्त्वाबद्धानां केचित् मीना: पलायितुमीहन्ते तेतु मुमुक्षूपमाः किञ्च तत्रावद्धानां कुतश्चित् कारण वशात् जालं निर्भिद्य —त्प्लुत्य च केचित् मीना: पलायन्ते। ते तु मुक्तजीवोपमाः। तदा

कैवर्ता कमपि पलायमानं मत्स्यं निरीक्ष्यउच्चैर्घोषयन्ति'अहो कश्चित् वृहन्मत्स्यः पलायितः'। अपिच वहवो मत्स्याः पलायितुमसमर्था अयतमानाश्च जालं मुखेन धृत्वा सरोनिम्नकर्दमे मुखं निधाय ततोऽधोऽधःकर्दमं प्रविशन्ति, तत्र स्थित्वा मन्यन्ते वयं सुखिनइति। किन्तु ते न इदं जानन्ति यत् कैवर्ता अधुनैव जालमादायाकृष्य च तान् भूमावानयिष्यन्ति। ते तु वद्धजीवोपमाः।

"वद्धजीवास्तु कामिनीकाञ्चनादिकेषु निमज्जमाना सुखिनो वयमिति मन्यन्ते। अज्ञानतो भोगफलं मरणमपि ते तु न जानन्ति यदा वद्धजीवो मृत्युदशायामचिरभाविनीमापन्नस्तदा तस्य पत्नी ब्रूते, त्वन्तु चिराय गच्छसि, मम जीवनोपायस्त्वया किम्भूतः सम्पादितः। अपिच स मृत्युशय्यायां शयानो वदति प्रदीपस्थां वर्तिकामपसारय, अन्यथा प्रचुरं तैलक्षयो भविष्यति।

"विषयासक्ता वद्धजीवास्तु परमात्मानं न भजन्ति। तेषु ये ये यत्र कर्मणि रक्तास्ततोलब्धावसराः काल्पनिकोपाख्यानालापेन केनापि विफलकर्मणा क्रीडाविशेषेण वा कालं नयन्ति। केचन पुनरवसरसमाप्तये वृतिरचनायां नियुक्ता वयमित्युक्त्वा पृच्छकान् प्रीणयन्ति।

विज्ञाय तथाविधामुक्तिं निष्पन्दाः श्रोतारः।"

कश्चन भक्तः- महात्मन्, संसारलग्नचेतसामतिबद्धानां जीवानां परित्राणे कश्चित् उपायो वर्तते नवा ?

श्रीरामकृष्णः— अवश्यमेवोपायोऽस्ति । अन्तरान्तरा सद्भिः सह मेलनं तथान्तरान्तरा निर्ज्जने स्थाने परमेश्वरचिन्तन-विचारणादिः अपिच तं प्रार्थयेत मह्यं भक्तिं विश्वासञ्च देहि विश्वासे जाते वस्तुलाभः विश्वासं विना अन्या काचित् गरीयसी सुदुर्लभा ज्ञानसामग्री । (केदारं प्रति)श्रूयताम् विश्वास शक्तिः पुराणेषूक्ता । यः साक्षात् पूर्णब्रह्म नारायणो रामचन्द्रो नाम स लङ्कां गन्तुं सेतुं बबन्ध परन्तु रामनाम्नि दृढविश्वास बलात् सेतुं विनैव तस्य सेवको हनुमान् सागर-मुत्तीर्णः । (सर्वेषां हास्यम्) । कञ्चित् लङ्कां तर्तुकामं जनमुवाच विभीषणः । त्वमिदं स्ववस्त्राञ्चले ग्रथान । उद्घाट्य मापश्य । यद्यन्यथाकुर्या उदधौ निमग्नो भविष्यसि । स च यानादिकं विना विश्वासबलेनाञ्जसा गच्छन्नब्धौ पथि व्यमृशत् । अहो ! किमिदमद्भुतं द्रव्यं येन पारावारस्योपरि गन्तुं शक्यते मया ! एतद् विचिन्त्य वस्त्रग्रन्थिमुद्घाट्य केवलं राम रामेति लिखितं पत्रमपश्यत् । नान्यत् किमप्यासीत् । तद् दृष्ट्वैवोक्तं तेन, आ ! इदं द्रव्यम्, (सामान्यमेतत्) तस्याविश्वासो जातः । तेन स मग्नउदधौ । यदीश्वरविश्वासबलः पुमान् गोब्राह्मण-स्त्रीहत्यादि महापातकं कुर्यात्, तथापि विश्वासबलेन तन्महा

पातकमुत्तीर्णो भवेत्। स यदि वदेत्, कदापि नाहं करिष्याम्येवं तर्हि तस्मात् पातकात् भयं तस्य नास्त्येव। एतदुक्त्वाऽगायत्—

मरिष्यामि यदा दुर्गा दुर्गेत्युक्त्वा तदा कथम्।
न विधास्यति मे त्राणं दीनस्य भवगेहिनी॥

विदितं तद्भवेद्विप्र नारी गोभ्रूणहिंसया।
सुरापानाच्च पापानि यानि तानि न चिन्तये॥

शक्तो ब्रह्मपदं लब्धुं दुर्गानाम प्रभावतः।

नरेन्द्रमभिलक्ष्य भगवान् परमहंस देवः कथयति, (भक्तान्-प्रति) नरेन्द्रनामा युवायं मदन्तिके यथावतिष्ठते न तथान्यत्र। यथादुष्ट बालकः पितुरन्तिके भीतइव तिष्ठति, अजिरे क्रीडन-समये स तथा न भवति, किन्तु भिन्नइव प्रतिभाति। एवम्विधा साधनरता युवानो "नित्य सिद्ध" पदभाजो भवन्ति। नित्य-सिद्धास्तु संसारे कदाचित् नैव बद्धा भवन्ति। आबाल्यात् भगवन्तमधिगन्तुं यतमाना लोकशिक्षार्थमाविर्भवन्ति विश्वं पुनन्ति च, संसारमसारमनित्यं जानन्तस्ते कामिनीकाञ्चनादि-केषु न संसक्ता भवन्ति।

"वेदप्रसिद्धा होमानाम्नी कापि पक्षिणी समुन्नतमाकाश-मधिवसन्ती तत्रैवाण्डं प्रसूतेस्म। परन्तु सुदीर्घादाकाशपथात् पतन् डिम्बः क्रमेण स्फुटीभवन् लब्धपक्षचञ्चुनेत्रः सन् पतन्त-

मात्मानं वीक्ष्य भूपतनात् देहस्य चूर्णीभावं मन्यमानो जननीं प्रति तूर्णं चरमवेगो धावति । ततश्चोद्ध्र्वमार्गमाक्रामति ।

इदं श्रुत्वा नरेन्द्रः कक्षात् बहिर्गतः । तत्र गृहे केदाराध्यापक प्राणकृष्णाः समुपस्थिताः ।

श्रीरामकृष्णः—पश्यन्तु तावत्, नरेन्द्रस्तु गायको वाद्यवित् विविधविद्याभ्यासनिपुणश्च सर्वविषयकुशलः । एकदा केदारेण सार्द्धं मतर्कयत् । तदा युक्तिजालेन केदारस्य युक्त्याभासं दूरीचकार । (सर्वेषां हास्यम्)

श्रीरामकृष्णः— (अध्यापकं प्रति) आङ्गलभाषायां किञ्चित् न्यायशास्त्रं विद्यते नवा ?

अध्यापकः—ससम्मानमाह, एवं तदपि वर्तते ।

श्रीरामकृष्णः—किम्भूतम्वा तत् शास्त्रं, वदाल्पशः ।

अध्यापको निदेशादाकुलोऽप्यवददिदम्—मरणमनुष्यत्वयो र्व्याप्तिर्बहुशः प्रत्यक्षसिद्धेति । पण्डिताख्येषु मनुष्येषु सामान्यतो विशेष सिद्धिरिति रीत्या भवति । तथा विशेषेणापि सामान्यस्य सिद्धिस्तु—काकविशेषे कृष्णरूपदर्शनेन काकत्वकृष्णरूप व्याप्तिः काकसामान्येषु कृष्णरूपं साधयति । एवम्विधस्य व्याप्तिरूपसिद्धान्तस्य भ्रमः सम्भवति । यतोऽन्वेषणक्रमेण देशान्तरे धवलकाकस्य समुपलब्धि-सम्भवः । यथा वा पिपीलिकाण्ड सञ्चार दर्शनेन भवति मेघानुमानं तेन च मेघ-

वर्षण हेतुरिति सिध्यति। कस्यापि पुंसो द्वात्रिंशद्दन्तदर्शनेन जनान्तरे च तथावलोकनेन सर्वेषामेव पुंसां भवति द्वात्रिंशद्दन्तवत्ताज्ञानम्।

एवमाङ्गले शास्त्रे न्याये वर्तते। श्रीरामकृष्णस्तु शृण्वन्नपीदमुन्मना बभूव। तस्मात् इयं कथा प्रचुरतां न गता।

सम्प्रति संजातो भक्तपरिषद्भङ्गः। ये तत्र स्थिता भक्तास्ते तु गृहात् बहिरागत्येतस्ततो विचरन्ति। अध्यापकोऽपि पञ्चवट्यादिकं स्थानं परिभ्रमन् कियत्क्षणानन्तरं तत्र आगत्य श्रीरामकृष्णगृहोत्तरालिन्दे महाव्यापारमपश्यत्। श्रीरामकृष्णस्तु तत्र दण्डायमानो निस्पन्ददेहो निर्निमेषनेत्रो रुद्धप्राणवायुः, सन्दिग्धप्राणस्पन्दो बभूव।

नरेन्द्रो गायति—

केचित् भक्तास्तत्र दण्डायमाना आसन्। अन्यः कश्चित् परमहंसदेवस्य विस्मयकरं विचित्रं तथावस्थानमवलोक्यापृच्छत् किमिदम्! कश्चित् भक्तः प्राहायं समाधिरित्युच्यते। अध्यापकेन अयं समाधिः कदा कुत्रापि न दृष्टो न श्रुतश्च। ततोऽवाक् भूत्वाचिन्तयदीश्वरं विचिन्त्य मानवाः कथमसाध्यामिमां विषयेन्द्रिय निवृत्तिं साधयन्ति? अहो न जाने? कथम्भूताभिर्वा श्रद्धाभक्तिभिरियमवस्था जायते!

नरेन्द्रस्य गानमिदमासीत्—

निरञ्जनं चिद्घनं तं हरिं चिन्तय मानस ।
रञ्जितं नवरागेण कोटिचन्द्रविनिन्दकम् ॥
यदीयरूपालोकतश्चपला याति विस्मयम् ।
जीवितञ्चापि भवति पुलकैराकुलं मुहुः ॥

रोमाञ्चदेहो नेत्रप्रान्तविगलितप्रेमाश्रुः श्रीरामकृष्णः कोटिचन्द्रविनिन्दकं रूपं निरीक्ष्यान्तरान्तरा हसतीव । न जाने कथम्भूतैः क्रियाभिः साधनैस्तपोभिः कियन्तीभिः श्रद्धा-भक्तिभिश्च इदं चिन्मयरूपं पश्यति ।

पुनरपि गायति—

चित्तपद्मे पदं तस्य चिन्तयन् प्रियदर्शनम् ।
तमपूर्वाकृतिं पश्य सप्रेमाक्षः प्रशान्तहृत् ॥

पुनरपि तथैव हासो भुवनमोहनः । तथा निष्पन्दाङ्गो निर्निमेषलोचनः सम्वृत्तस्तदानीं स देवः । अनुपमं चिन्मयरूपं निरीक्षमाणः परमानन्दमग्नश्च । अधुना शेषचरणमिमं गायति—

चिदानन्दरसे भक्तियोगमग्नश्चिरं भव ।

योगेश्वरमनुपमं समाधिमापन्नं प्रेमानन्दमूर्तिं श्रीरामकृष्णं विभाव्य मथितहृदयं मधुरगीतं स्मारं स्मारं पायं पायञ्चाध्यापको गृहं ययौ ।

## चतुर्थमध्यापकस्य परमहंसदर्शनम्

परेद्युरवसरतया पराह्णतृतीयघटिकासमये पुनरपि अध्यापकः समुपस्थितः। श्रीरामकृष्णस्तु तथैव स्वगृहे खट्वामधिगतो भक्तनरेन्द्रभवनाथादिपरिवृतः हास्याननः प्रमोदेन तैःसह समालपति साधुवादम्। गृहं प्रविशन्तमध्यापकं दृष्ट्वा तमभिलक्ष्य च परमहंसदेव उच्चैर्विहस्य समुपस्थितान् युवकान् समाहूयोवाच। रे, सोऽयमागतः! इत्युक्त्वा च पुनरपि हसति स्म तं हसन्तं दृष्ट्वा जहसुर्युवानः। ततश्च अध्यापक आगत्य पाश्चात्यरीतिमपहाय भूमौ शिरो निधाय ननाम तत्रैवोपविवेश च। श्रीरामकृष्णस्य हास्यं किं निमित्तमासीत्, तत् स्वयमेव परमहंसदेवो भक्तान् विज्ञापयतिस्म यथैकदा चतुर्थघटिकायां स खलु खादिताहिफेनः कश्चिन्मयूरः परेद्युश्चतुर्थघटिकायां तत एवाहिफेनमत्ततावशात् यथा समुपस्थितो बभूव। (सर्वेषां हास्यम्)। अध्यापको मनसाचिन्तयत् यथार्थमेवास्य भाषणम्। गृहं गतोऽपि तत्र कदा गमिष्यामि, कदा तमपूर्वं पुरुषं द्रक्ष्यामि, इत्येवमहर्निशं मे मनसि कामना समुदेति न जाने, केनाकृष्टः सन्नत्रागतोऽस्मि। इच्छन्नप्यन्यत्र गन्तुं न शक्नोमि। अथ परमहंस देवो युवभिः सार्द्धं वयस्यैरिव हास्य कौतुकादिकं करोतिस्म। तेन कौतुकार्णवोत्थिततरङ्गेन तरङ्गा-

यिता आप्लुताश्च ते युवानः। तेषु हसत्सु अध्यापको विस्मितइ-वास्त। तमकृतहासमवलोक्य रामलालमुवाच देवः। पश्य इमम्। इमे सर्वे युवानो हास्यकौतुकादिकं कुर्वन्ति, अयन्तु लब्ध-गाम्भीर्यः एभ्यो वर्षीयस्त्वात् किमेवम्? तदा अध्यापकः सप्तत्रिंशद्वर्षवया आसीत्।

एवं ब्रुवन् परम भक्त हनुमच्चित्रं कुड्येऽवस्थितं दृष्ट्वा तत् स्मरण वशात् तस्य त्याग माहात्म्यं तदानीमकथय-द्देवः।

स च हनुमानीश्वरं विना यशोद्रविण देहेन्द्रियप्रीत्यादिकं न किमप्याकाङ्क्षति यदा हनुमान् रावण वधनिमित्तं ब्रह्मास्त्रं स्फटिकस्तम्भाद् गृहीत्वा पलायते स्म, तदा मन्दोदरी अस्त्र-प्राप्तये वानर प्रिय खाद्यानि विविधानि फलान्यादाय वातसुतं तं प्रलोभयितुं कृतयत्ना विफला बभूव। तदोवाच हनुमान्—हे मन्दोदरि—

फलं न याचे किमु नास्ति तन्मे
प्राप्तं फलं येन जनिः कृतार्था।
वृक्षोहि मोक्षस्य फलस्य राम-
श्चित्तेऽस्ति मे कल्पतरुर्हि तस्य।

मूलं पदाब्जं श्रयतो ममेच्छा
यस्मिन् फले तच्च तदा लभेयम्,
फलं त्वया दत्तमहं न काङ्क्षे,
दास्यामि तुभ्यं तदवाप्ति योग्यम्।

परमहंस देव इदं गायन् पुनरपि समाधिमग्नो बभूव। तथैव निस्पन्ददेहो निर्निमेषनेत्रः समकायश्चित्रलिखित इव विभाति स्म। अधुनैव भक्तास्तेन सह हास्य कौतुकादिकं कुर्वन्ति स्म। ते अपि एतन्निरीक्ष्य विस्मिताः सन्त एकाग्रदृष्ट्वा साग्रहमवलोकयन्ति स्म।

बहुक्षणानन्तरं समाधिभङ्गात् प्रकृतिं गतः सहास्यः शिथिलाङ्गः पुनरपि निजव्यापारेष्विन्द्रियादिकं व्यापारयन् नेत्र प्रान्त विगलितानन्दाश्रु, राम रामेति नामोच्चरयन् श्रीरामकृष्णः प्राकृतजनइव पुनरपि नरेन्द्रमध्यापकञ्च प्राह। परस्परं युवामाङ्गल भाषया तर्कयतम्। श्रोष्यामि युवयोर्विचारम्। तदुक्तिं श्रुत्वा तौ हसतः। पुनरपि परमहंसदेवे ब्रुवति सति वङ्गभाषया तावालापं विदधाते। नत्वाङ्गलभाषया। तत्-कृपया अध्यापकस्य तर्क बुद्धिरपगतेति, पुनस्तत्समीपे विचारः कथमुद्भवेत्?

पञ्च घटिका उत्तीर्णा । अध्यापकनरेन्द्रभिन्ना ये भक्तास्ते तु यथास्थानं प्रस्थिताः। नरेन्द्रस्तु भृङ्गारं गृहीत्वा तत्रत्यहंस-नाम सरोवरमतीत्य झाउनाम वृक्षञ्च निकषा शौचार्थं जगाम। अध्यापकस्तु देवालयसन्निधावितस्ततो विचरति । कियत्-क्षणानान्तरं कुठीनाम प्रासादमतिक्रम्य हंसनामजलाशयमागत्य तस्य दक्षिणदिग्भागे सोपानोपरि दण्डायमानं श्रीरामकृष्णं तथा भृङ्गारहस्तं प्रक्षालित मुखादिकं नरेन्द्रञ्चापश्यत्।

परमहंसदेवो नरेन्द्रं ब्रूते, 'नरेन्द्र, पुनः पुनरेहि मदन्ति-कम्, त्वमसि नवागतनवीनपतिवदिति भृशमतितूर्णं मिलन-मुचितन्ते (नरेन्द्राध्यापकयोर्हास्यम्)। आगमिष्यसि न वा ? तदानीं ब्राह्मसमाजसेवी नरेन्द्रो ब्रूते, अवश्यमागन्तुं यतिष्ये।

अथ सङ्गताः सर्वे जनाः प्रासादपथमवलम्ब्य परमहंस देव-स्य गृहं गच्छन्ति; प्रासादप्रान्ते अध्यापकमुवाच श्रीराम कृष्णः। "अये शृणु तावत् विपणिमापन्ना गावामुत्कर्षापकर्षविदः क्रयार्थिनः कृषकाः पुच्छप्रान्ते हस्तौ निधाय गाःपरीक्षन्ते या खलु स्पर्शमात्रेण सचकितमुत्प्लवते, गौरसौ श्रेष्ठा इति क्रय-योग्यतया निर्णीतं भवति । गोनिष्ठस्ताद्दशविक्रम इव विक्रम नरेन्द्रपरीक्षितः सम्यक्। तत्रास्ति विपुलमान्तरं तेज एवमुक्त्वा प्रभुरसौ हसन् बभाषे, द्रवीकृतचिपिटकवत् काठिन्यसंहनन-हीनो बलक्लेशवर्ज्जितोऽपि वर्तते कश्चन जनसंघः।

सन्ध्यागता। परमहंसदेव ईश्वरं विचिन्तयन् अध्यापकम-ब्रवीत्, नरेन्द्रेण सार्द्धमालापं कृत्वा स कीदृशो युवाइति निश्चित्य मां ब्रूहि।

देवालये आरात्रिकं समाप्तम्। बहुक्षणानन्तरं चान्दनी-नामाङ्गन पश्चिम दिगवस्थितं नरेन्द्रं पश्यन् तेन सह अध्यापक आलपति। नरेन्द्रेणोक्तं तावत् ब्राह्मसमाजसभ्योऽहम्, कलशालायां (कलेज) पठामीत्यादिकम्।

रात्रिः समधिका जाता। तेन गृहं गन्तुकामोऽध्यापकस्तत आगत्य श्रीरामकृष्णमन्वेषयामास। तन्मधुर गीतमुग्ध मनः-प्राणः अध्यापकः पुनरपि तत् श्रोतुमिच्छुकः सन् तमन्वेषयन् कालीमन्दिर सम्मुखस्थनाट्यमन्दिरमन्तरा एकाकिनं विचरन्तं तं सङ्कुचितचित्तः सन् पप्रच्छ।

किमद्य भगवतो गानं भवेत्? श्रीरामकृष्णो विचिन्त्यावदत् तदद्य न भविता। एतदुक्त्वा पुनरपि विभाव्यावोचत्, 'अये वसुबल रामगृहं गमिष्यामि, तत्र गीतिर्भविष्यति, त्वमपि तत्र गच्छ।

अध्यापकः—ससम्मानमाह, अवश्यं गमिष्यामि।

श्रीरामकृष्णः—तद् गृहं ज्ञातं न वा?

अध्यापकः—ससम्मानमाह, न जाने।

श्रीरामकृष्ण—वोसपाडास्थितवसुबलराम गृहम्?

अध्यापकः—ससम्मानमाह, तथास्तु सन्धानेन ज्ञास्यामि।

श्रीरामकृष्ण—(अध्यापकेन सह विचरन्) अये, पृच्छामि श्रीमन्त मां दृष्ट्वा तव कीदृशो बोधः संजात इति ? तूष्णीम्भूतं त निरीक्ष्य पुनरपि पृच्छति, अये ! कियती मे प्रज्ञेति जानासि त्वम् ? किमत्र मन्यसे ? कियदाणकम् ?

अध्यापकः—कियन्मात्रमपि भवन्त न विज्ञातुमर्हामि । परन्तु एतावान् ज्ञान-प्रेम-भक्ति-विश्वास-वैराग्योदारगुणसम्पन्नः कश्चन पुमान् कुत्र च कदापि न दृष्टः । एतत्श्रुत्वा जहास देवः ।

एवं संवदन्नध्यापकः प्रणम्य त देव प्रतस्थे । उद्यानप्रान्तद्वारमागतो विषयस्य कस्यापि स्मरन् पुनरपि त देवमाप । नाट्यमन्दिर गते क्षीणालोके तेजसा दिशो भासयन्नात्मारामः स देवः केशरीव वने द्वितीयरहितो विगतभी विचरति ।

श्रीरामकृष्णः—अध्यापक वीक्ष्य प्राह, कथं पुनरपि प्रत्यागत ?

अध्यापकः—ससम्मानमाह, सम्भावयामि तद्धनि गृहमिति-प्रवेशाधिकारो मे भविष्यति न वेति शङ्के भवाङ्घ्रिः साङ्घ्रि जिगमिषुरस्मि ।

श्रीरामकृष्णः—मास्तु ते शङ्का, तत्र मदन्तिकमाप्तु मन्नाम कथयति त्वयि नेष्यति त्वां कश्चिदवश्यं समीपं मे ।

तदिह भवन्तः प्रमाण मित्युक्त्वा प्रणमन् अध्यापकः प्रतस्थे ।

---

श्रीश्रीरामकृष्णकथामृतस्य प्रथमभागस्य प्रथमखण्डस्यायमनुवादः ।

# द्वितीयकथा

## श्रीईश्वरचन्द्र विद्यासागरस्य गृहे—श्रीरामकृष्णः

आत्मारामा महात्मानः भीषणं भवसागरमुत्तीर्णा अपि-त्रितापदग्धानां मानवानामुद्धरणाय जगतो हिताय सनातनधर्मं स्थापनाय च सुधांशुवत् भुवि विचरन्ति एवं परमहंसदेवः श्रावणे मासि कृष्णे पक्षे षष्ठ्यां तिथौ द्व्यशीत्याधिकाष्टादश शततमे खीष्टाब्दे बादुरबागान्याख्यस्थाने ईश्वरचन्द्र विद्यासागर गृहं भक्तैः सह आजगाम।

भक्तवर्गं परिवेष्टितं प्रेमपाकपरिपूर्णविग्रहमीश्वरीय-कथासु सहर्षपुलिकमश्रुविलोल लोचनं रुचिरदेहकान्तिं परम-हंसदेवं दृष्ट्वा सर्वगुणालङ्कृत विद्यासागरो यथाविधि पूज-याञ्चकार। कोऽयं परमहंसः किं तस्याचरणभाषणमित्यत्रोत्-सुकाः पार्श्वगृहादन्यतश्च बान्धवाश्चान्ये श्रुतवृत्तास्तत्र समु-पस्थिताः।

ततः प्रमोदेन परस्परं तौ आलापयामासतुः। स्वयं मान-मनिच्छन्तो मानदा भवन्ति महात्मान इत्याह श्रीरामकृष्णः अहो मम भाग्यम्! यतोऽद्य त्वां दृष्ट्वा सागरं प्रविष्टोऽस्मि।

विद्यासागरोऽवोचत् सहास्यम्; तर्हि अस्मात् लवणसमु-द्रात् किञ्चित् लवणाक्तजलं गृहाण।

श्रीरामकृष्णः—ये त्वविद्याकामकर्मप्रभवा मलिनमानसा आशापाशशतैर्बद्धा विवेकहीनास्ते लवणसमुद्रा इव भवितुमर्हन्ति। नैवं त्वम्; यतः क्षीरनिधिरिव बहुगुणसम्पन्नोऽसि।

विद्यासागरः—एवं वक्तुं शक्यते भवता।

श्रीरामकृष्णः—लोकहिताय सत्वगुणप्रभवाणि तव कर्माणि। सत्वगुणातिरेके दयादिगुणाः प्रभवन्ति। त्वं विद्यामन्नञ्च ददासि दरिद्रेभ्यः। फलाकाङ्क्षारहितेन निष्कामकर्मणा भगवदर्पणबुद्ध्या चित्तशुद्धिक्रमेण वा भगवत्साक्षात्कारः घटते। तेन च जन्मजरामरणजं भयं न भवति। नामयशःपुण्याकाङ्क्षया कर्माणि सकामा भजन्ति अपिच त्वं सिद्ध एव।

विद्यासागरः—कथं सिद्धोऽस्मि ?

श्रीरामकृष्णः—पटोलालुसामाख्ये फले सिद्धे सती कोमले स्तः। तद्वत् तवात्यन्तकोमलताऽस्ति; यतस्तव एतावती दया सर्वभूतेषु।

विद्यासागरः—निष्पेषिते माषे सिद्धे सति न याति तस्य काठिन्यम्। न वा कोमलता समायाति।

श्रीरामकृष्णः—नचैवं त्वम्। यतो ये तु केवलमसिद्धापण्डिता इति नामधेया विवेकवैराग्यहीनाः कामकाञ्चनसक्तास्ते तु शकुनिवत् विचरन्त्यविद्यावति संसारे। यथा शकुनयोऽ-

त्यूद्ध्वं वियति उड्डीयन्ते; परन्तु तेषां दृष्टिर्निबद्धा पूतिगन्धमयस्थाने।

पुनश्च ब्रह्मसम्बन्धिनीं गाथां कथयति श्रीरामकृष्णः। धर्माधर्मज्ञानाज्ञानसुखदुःखेच्छादिमयं भूतभौतिकभावाभावरूपं कार्यात्मकं जगत्। त्रिगुणात्मकत्वाच्चास्य भवति धर्माधर्मवैलक्षण्येन सुलभः शुभाशुभसमावेशः।

"प्रोक्तधर्मादेरन्तःकरण धर्मतयान्तःकरण-परिच्छिन्ने — चैतन्ये जीवाख्ये च तेषामध्यासात् जीवः कर्त्ता सुखी दुःखीति भवत्यज्ञानकृतमिथ्याव्यवहारः। ब्रह्मणि तु सच्चिदानन्दे नाज्ञानलेशावकाश इति; न तत् कार्यस्य शुभाशुभादेरन्वयः कदापि।

"यथा—मध्यस्थः प्रदीपस्तत्सन्निधौ कश्चित् भागवतादिकं पठति; कश्चित् परप्रतारणार्थं चेष्टते। नहि तेन शुभाशुभकर्मणा प्रदीपो बद्धः। तद्वत् साक्षी-उदासीनो मध्यस्थ इति निर्लेप एव। यद्यपि मायाधिष्ठानं ब्रह्म तथापि तया नैव लिप्तम्, यथा सर्पः स्वनिष्ठेन विषेण नोपलिप्यते; तस्य च विषकार्यमरणादिकं न भवति; तद्वत् माययाणुमात्रमपि ब्रह्म न सम्बध्यते। (१) अपिच

(१) आयमाशय—अविद्यादेस्तच्छक्तिविशेषतया तन्निष्ठत्वेऽपि तदनतिरेकात्, "सदेव सोम्येदमग्र आसीत्" इत्यादिना तत्

यतोऽवाङ्मनस गोचरं ब्रह्म; अतोऽनुच्छिष्टं हि तत्। सर्वतत्वातीतत्वात् करणग्रामेण प्रकाशयितुमसमर्थमिति। वेदपुराण-तन्त्र-मीमांसादि चतुर्दश विद्यास्थानानि-उच्छिष्टतामापुः। नैव ब्रह्म उच्छिष्टम् तस्मात् अवाङ्मनस गोचरं ब्रह्म। ज्ञानादेर्विशिष्टविषयकत्वे निर्विशेषं ब्रह्म प्रमाणाविषयमिति सर्वव्यवहारातीतम्।

विद्यासागरः—अनुच्छिष्टं ब्रह्म एतत् वाक्यं श्रुत्वा विस्मयेन तत्रत्यानाह—शिक्षितादद्य नवीना काचन हितवाणी।

श्रीरामकृष्णः—श्रूयतामाख्यायिका। कस्यापि द्वौ पुत्रौ स्तः। आर्यसंस्काराश्रमानुकूल्यार्थेन-पित्रा वेदाध्ययनार्थं तौ प्रेरितौ गुरुकुलम्। तत्र यावत् कालमुषित्वा वेदाध्ययनान्तरमाजग्मतुः स्वगृहम्। आगत्य पितरं प्रणेमतुः। पिता तयोःशिक्षापरिचयार्थं पप्रच्छ। हे कुमारौ! गुरुकुले स्थित्वा युवाभ्यां वेदा अधीताः, किदृशी ब्रह्मविद्या समधिगतेति वदताम्; किंस्वरूपं ब्रह्म? तच्छ्रुत्वा ज्येष्ठ पुत्रो वेदेभ्यो बहून् श्लोकानुद्धृत्य ब्रह्मस्वरूपं ज्ञापयामास। "स एष नेति नेत्यात्माऽगृह्यो नहि

---

प्रतिपादनात् अतिमहतो ज्ञानस्याश्रयाभावेन चाज्ञानस्य परिच्छिन्नस्य न ज्ञानावरकत्वं सम्भवति। अतएव न ब्रह्मण्यज्ञान-सम्बन्धः। किन्तु जीव एव इति केचिद्वदन्ति।

गृह्यते, सत्यज्ञानमनन्तं ब्रह्म इत्यादिकम्। "कनिष्ठपुत्रः पितुर्वचः श्रुत्वा ज्ञात्वापि न बभाषे। मौनी तस्थौ। कुमारं तूष्णीम्भूतं दृष्ट्वा प्रसन्नः पिता तमिदमुवाच। तात! त्वया किञ्चित् ज्ञातं ब्रह्मस्वरूपम्। 'यस्यामतं तस्य मतं मतं यस्य न वेद सः'। मौनमपि लक्षणं ब्रह्मविदः। परन्तु प्राकृता जना ज्ञानार्थमप्रयतमाना अहङ्कारेण वदन्ति वयं सर्वज्ञा इति। यथा काचित् पिपीलिका शर्कराशैलमापन्ना शर्करायाः कणमेकं भुक्त्वा कणान्तरं संगृह्य गच्छन्ती शर्कराशैलमतः परं नेष्यामीति कल्पयति। तथैव हि अज्ञानां ब्रह्मणि कल्पना।

भवन्तु नाम चरमपदाधिरूढा नियन्तारः शासकाश्च मानवादयो ब्रह्मादयो वा तथापि तं ज्ञातुं नार्हन्ति। यतः स हि ईश्वर ईश्वराणां पतिः पतीनां नियन्ता नियन्तॄणां शासकः शासकानाम्। श्रुतिरस्य 'तदु नात्येति कश्चन, कोऽद्धा वेद' इत्यादि दुर्ज्ञेयतां वक्ति।

"स्यादेतत्, तर्हि वेदपुराणादिषु या ब्रह्मप्रतिपादिका उक्तयस्ता किंदृश्यः स्युः? श्रूयताम्; कश्चित् दृष्टसागरं पुरुषं पप्रच्छ अग्रे, किंदृशो दृष्टः सागरः? तत् स्वरूपं प्रबोधय माम्? विस्मयेन दृष्टसागरः ज्ञापयामास। अहो! स हि जलनिधिरत्युच्चैस्तरङ्गभङ्गं प्रचुरकलनादः परमाद्भुतः। उदधेर्नैव

ईश्वराणां पतिः पतीनां नियन्ता नियन्तृ्णां शासकः शासका-नाम् । श्रुतिरस्य 'तदु नात्येति कश्चन, कोऽद्धा वेद' इत्यादि दुह्ये यतां घश्क्ति।

"स्यादेतत्, तर्हि वेदपुराणादिषु या ब्रह्मप्रतिपादिका उक्तयस्ता कीदृश्यः स्युः ? श्रूयताम्; कश्चित् दृष्टसागरं पुरुषं पप्रच्छ । अये, कीदृशो दृष्टः सागरः ? तत् स्वरूपं प्रबोधय माम् ? विस्मयेन दृष्टसागरः ज्ञापयामास । अहो ! स हि जलनिधिरत्युच्चैस्तरङ्गभङ्गप्रचुरकलनादः परमाद्भुतः । उदधेर्नैव वाच्यमपरं किञ्चित् । उक्तञ्च नहि ते ते असाधरणा धर्मा-अनुभूयमाना अपि शक्या वक्तुम् । नखल्विक्षुक्षीरगुडादीनां मधुररसभेदाः सरस्वत्याप्याख्यातुम् । तद्वत्हि शास्त्रवाक्यानि यथा कथञ्चिदर्थप्रतिपादकानि भवन्ति प्रायशः । सगुणं निर्गुणं ब्रह्मप्रतिपादिकास्ता वाचः परोक्षं बोधयन्ति । परोक्षं हि शास्त्रज्ञानम् ।

"शुक देवादि महर्षयो ब्रह्मसागर वेलायां दण्डायमानास्तद्-दर्शनं स्पर्शनञ्चाकुर्वन् । न तु ते सच्चिदानन्दसागरे प्रविष्टा इति केचित् । इदं सच्चिदानन्दसागरप्रविष्टस्य पुनरागमनं न सम्भवति । समाधिना ब्रह्म साक्षात्कारः घटते; तस्मिन्नखण्डबोधात्मनि निर्विकल्पसमाधिविषये सति सर्वकल्पनारहिता विचारवर्ज्जिता तूष्णीमवस्था भवति । किं नाम ब्रह्मस्वरूपं तत्र वक्तुं शक्यते कैरपि । "ब्रह्मविद् ब्रह्मैव

भवति, तत्केन कं पश्येत् तत् कमभिवदेत्” इत्यादि श्रुति-सहस्रं तत्र प्रमाणम्।

“यथा एकदा काचित् लवणपुत्तलिका कियत् गाम्भीर्यमर्णवस्येति परिमातुमर्णवं प्रविष्टा सती तत्क्षणमेव तत्र निलीना। तस्या विलयस्तु 'नाशः कारणलयः' इत्याद्यनुशासनात्। तस्याः पृथक् सत्त्वाभावे को ज्ञापयिष्यति पारावारस्य गाम्भीर्यम्। कश्चित् भक्तोऽपृच्छत्—समाधिमन्तः पुरुषा ब्रह्मज्ञास्ते किं भाषां न भाषन्ते?

श्रीरामकृष्णः—नह्येष ममाशयः। यदात्मस्वरूपोपलब्धिस्तदा भेदधियोऽभावात् विचारो न सम्भवतीत्यर्थः। समाधेर्वृत्तिशून्यत्वेऽपि उत्थाने विद्यावृत्ति र्भवति महापुरुषाणाम्। यथा शङ्कराचार्यादयो लोकहिताय विद्यावृत्तिमवलम्ब्य ब्रह्मविद्यां लोके प्रचारयामासुः। यावत् न ब्रह्मसाक्षात्कारस्तावद् विचारणाबुद्धिः। यथा—इदं सत्, इदमसत्, इदं पुण्यम्, इदं पापम्।

“यावदपरिपक्वं हविस्तावदेव कलकल ध्वनिः। परिपाके तु नैव शब्दस्तद्वत्। अपितु तप्तकटाहस्थितपरिपक्वहविषा गोधूम पिष्टकं [लुचि इतिख्यातं] पक्वताप्तये कलं कलं यथा विनदति; ब्रह्मात्मनैव तिष्ठताऽपि विदुषा अज्ञं ज्ञानवन्तं विधातुं

तथा प्रभवति ।

"अन्यद् यथा द्विरेफा यावत् पुष्पेभ्यो मकरन्दं न पिबन्ति तेषां गुञ्जनानि भवन्ति; न तु पानवेलायाम् । अपितु कदापि मधु पिबन्तस्ते परमानन्देन नदन्ति ।

"यथा जलग्रहणसमये कुम्भात् भक् भक् ध्वनिर्जायते पूर्णे तु नैव शब्दः । अपितु पूर्णकुम्भात् कुम्भान्तरापूरणदशायां पुनः शब्दो भवति । तद्वत्‌हि नित्य शुद्धमुक्तस्वभावा ज्ञानिनोऽपि जगत् कल्याणाय विद्याप्रवर्तनाय ज्ञानदानाय चाचरणभाषण-शरीरधारणानि कुर्वन्ति । नैवान्यत् प्रयोजनं किञ्चिदस्ति तेषाम् ।

श्रीरामकृष्णः—पूर्वमृषयो ब्रह्मवेत्तारआसन् । ते महता परि-श्रमेण कठोर तपसा च ब्रह्मविद्यां समधिगतवन्तः । यावत् विषयबुद्धि लेशमात्रं वर्तेत, तावत् न ब्रह्मोपलब्ध्यं भवति । ते महर्षयस्तु ब्रह्मोपलब्धये प्रतिदिनं प्रातरुत्थायाश्रमात् बहि-रेत्य इन्द्रियाणीन्द्रियार्थेभ्यः प्रत्याहृत्य फलाद्याहारेण कालं नयन्तः कस्मिन् रहसि मनोऽनुकूले स्थाने निवृत्तचित्ताः सन्तस्तप स्तेपुः । ते अनेन प्रकारेण महता परिश्रमेण समाधि योगेन च दीर्घकालं मनसा चिन्तयन्त आत्मानं व्यजानन् ।

"कलियुगे तु मानवाः प्रायशो देहात्मपरा भवन्ति । तेषां देहात्मबुद्धिर्नापैति । ये त्वहमिकाविषय-रागादिकं त्यक्तु-

मशक्तास्तेषामहंब्रह्मास्मीति कथनं नोचितम् परन्तु दासोऽहं भक्तोऽहमित्याद्युल्लेखस्तेषां शोभनः । भक्तिवर्त्मनि स्थिता अपि ब्रह्म लभन्ते ।

"सोपानश्रेणिमतीत्य यथा तदूर्ध्वमुपैति प्रासादसेवी तथा नेति नेतीतिरीत्या विषयासक्तिमपास्य नित्यं चिदानन्दमुपलभते ज्ञानी । किञ्च विज्ञानी नाम विशेषेण जानातीति । सहि समधिगतेश्वरतत्वसाक्षात्कारः सन् ज्ञानिनोऽधिकमनुभवन् कृतकृत्यानामग्रेसर इव भाति विज्ञानी तु निर्गुणं ब्रह्मैव सगुणमिति विशेषं पश्यति । नेति नेतीति प्रतिषेध विषयीभूत यत् तदेव ब्रह्म-जीव जगद्रूपेणावतिष्ठते । इष्टकचूर्णादिसामग्रीसाध्ययोश्छदिसोपानयोरुपेयोपाययोरुपादानकृताभेदवत् जीवजगदभिन्नं सगुणं ब्रह्मापि निर्गुणात्मकमिति विशेषं पश्यन् विज्ञानी ज्ञानवतामधिको दर्शन विशेषात् ।

"छदि समायां ब्रह्मसाक्षात्कार भूमौ चिरं नावस्थानं देहिनः समाधिलब्ध ब्रह्मप्रत्यक्षस्य च धीरसमूहस्य; यथा-सा—रे—गा-मा—पा—धा-नि, इत्येवं स्वर साक्षात्कार प्रक्रियायां अन्तिमे नि—स्वरे बहुक्षणं स्थिति र्न सम्भवति । अहमिति: मतिः झटिति नापैति । तदानीं ब्रह्मैवाहं ब्रह्मैव जीवजगद्रूपं सर्वमिति भवति प्रत्यक्षम्; तदिदं विज्ञानं नाम ।

"परम पुरुषार्थ प्राप्तये उपायत्मका विविधा पन्थानः ज्ञानं नामैकः पन्थाः, ज्ञान—भक्ती द्वितीयः पन्थाः ।

त्रयोः पथोः सत्यताऽस्ति केवला भक्तिस्तृतीयः । ज्ञान योगेन भक्ति पथेन पथान्तरैरपि सर्वैरधिगन्तव्यं ब्रह्म । यावदहमिति मतिरीश्वर रक्षिता तिष्ठेत्; तावदुपायः खलु भक्तिपथो नाम सुलभो दोषवर्जितः ।

"विज्ञानी-सुमेरुवदचलं सकलक्रियारहितं ब्रह्म प्रत्यक्षीकरोति । तदीय गुणत्रयरचितमिदं जगत् तथापि निर्लिप्तमेव तत् । स हि भगवान् गुणातीतोऽपि षडैश्वर्यपूर्णः । तस्यैवैश्वर्यं जगज्जीव मनोबुद्धि भक्ति वैराग्यज्ञानादिकं सर्वम् । सस्मितं पुनराह स देवः; यस्य वित्तशालिनो गृहक्षेत्रादिकं विक्रीतं किमु स वित्तशाली ? श्रुत्वैतत् सर्वेषां हास्यमजनि । षडैश्वर्यवानीश्वरस्तस्यासति तदैश्वर्ये को नाम जनो मान्यतामनुमन्येत ? तथैव हासोऽजायत जनानां तदुक्तिश्रवणात् ।

"अपि च पश्यतु तावत् तदैश्वयभूतं विचित्रमिदं जगत् विविधानि द्रव्याणि विविधाः प्राणिनो वसन्त्यत्र । धनी-निर्धनः, मूर्खो विद्वांश्च; सूर्य्याचन्द्रमसौ, ग्रहनक्षत्राणि, बलवान् बलवत्तरो बलवत्तमश्च । तथा शक्तिमान्-शक्तिमत्तरः शक्तिमत्तम इति ।"

विद्यासागरः— स चेश्वरः कुतः कस्मै जनाय प्रचुरां शक्तिं कस्मै वाल्पां शक्तिं प्रदत्तवान् ?

श्रीरामकृष्णः—यद्यपि स परमात्मा सर्वव्यापित्वेन आपि-

पीलिकं सर्वभूतेषु विद्यते, तथाप्यधिकारिभेदेन शक्ति-प्रकाशतारतम्यं स्वीकार्यम्। नोचेत् कश्चित् पुरुषो दशसंख्य-कान् पुरुषान् कथं पराजयते ? कथं वा एकस्मात् पुरुषात्-कश्चिदपरः पलायते ? अपिच कथं त्वां सर्वे सम्मानयन्ति ? तव किं शृङ्गमुद्गतम् ? (हास्यम्) अन्यस्मात् तव दया विद्या चा धिका; तस्मात् बहुमान्योऽसि सर्वेषाम् ततस्ते सर्वे द्रष्टुमाग-च्छन्ति त्वाम्। अतस्त्वया शक्तिविशेषाः स्वीकार्य्या न वा ? एतच्छ्रुत्वा विद्यासागरः स्मितमकरोत्।

श्रीरामकृष्णः पुनरप्याह। केवले पाण्डित्ये सारवत्ता नास्ति। किञ्चेश्वरस्य प्राप्तये प्रबोधाय च शास्त्रपठनम्। शास्त्राणि तु तत्साक्षात्कारस्योपायभूतानि। कश्चित् पुरुषः कमपि साधुं पप्रच्छ भो महात्मन्; भवत्पुस्तके किमस्ति मह्यं प्रद-र्शय। स तद्वचनमाकर्ण्य तदुद्घाट्य दर्शयामास। तस्य प्रतिपृष्ठं ॐ राम इति तु शतशो निबद्धमासीत् नान्यत् किमपि।

"गीतायाः कोऽर्थः ? गीता गीता इत्यसकृदुच्चारणे कृते त्यागी त्यागीति बोधो जायत इति सम्भावयामि। हे मानवाः सर्वार्थान् परित्यज्य ईश्वरलाभाय यतध्वमिति तदभिप्रायः। सन्यासिनो गृहस्था ये वा केचित् सर्वैरेव मनस आसक्तिः परि-हार्या। चैतन्यदेवे दाक्षिणात्यतीर्थं भ्रमति सति कुत्रापि स्थाने कश्चित् पुरुषो गीतां पठतिस्म। अन्यश्च आरादुपविष्टस्तच्छ्रुत्वा

रुरोद । स च महाप्रभूरोदन्तं जनं पप्रच्छ ? अये, किमु गीतार्थ-मवगच्छसि ? तदुत्तरेणाह; गीताश्लोकार्थावधारणमशक्यं मे। कथं तर्हि क्रन्दसि ? भक्तस्तदुत्तरेणाह, अत्र गीतापठनकाले अर्जुनस्यस्यन्दने श्रीकृष्णोऽर्ज्जुनमुपदिशतीतिदृष्ट्वा रोदिमि ।"

श्रीरामकृष्ण:—विज्ञानी-कथमच्युतपदारविन्दे भक्ति-महैतुकीं करोति ? तत् समाधानन्तु समूलमहङ्कारो नापैति। निर्विकल्पकसमाधौ विनष्टेऽप्यहङ्कारे समाधिभङ्गे पुनरुद्भवात्।

"अविद्याधीनानां जीवानां कैव कथा। ते सदैवाहन्त्वममत्वा-पन्नाः। तेषामहमिका सवथैव जागर्त्ति। यथाश्वत्थवृक्षच्छेदने परेद्युस्तस्मात् शाखोद्गमः। यथावा स्वप्नदृष्टस्य व्याघ्रस्य जाग्रति स्मरणं हृदि कम्पादिकं जनयति। तथा लीना दुर्लक्ष्याप्य-हमिका पुनरुद्भवतीति चित्रम्। अहमिका हि जीवानां महतीं यन्त्रणां साधयति। तत्रैकमुदाहरणम्, गोहम्बारवस्य कोऽर्थः ? अहमहमिति। सा तथाविधाहमिका वशात् संसारे तावतीं यन्त्रणामुपैति। यथा कृषको भूमिकर्षणाय तां लाङ्गलेन संयुन-क्ति। तत्र सा प्रखरतापवृष्ट्यादिकं सहते, पशुघातकेन वध्यते च। तेन तस्याश्चर्मणा उपानहो जायन्ते। तच्चर्मणा ढक्कापि भवति। ततश्च कश्चित् वंशदण्डाभ्यां तामाहन्ति।

(हास्यम्)। तथापि तस्या न निस्तारः। परिशेषे च तस्यानाड्या तन्तुवायस्य तन्तुशोधकस्य च यन्त्रादिकं जायते। तादृश यन्त्रोत्थितेन शब्देन तुँहुँ तुँहुँ भाषाप्रसिद्धं (त्वंत्वमिति) ध्वनिर्जायते; तदा तस्या गोः यन्त्रणामुक्तिरुपचर्य्यते। तथाजीवेन। यदा पुत्रोऽस्मि; दासोऽहमीश्वरस्येत्युच्यते तदा तस्य मुक्तिः? एकदा रघुकुल नाथो रामचन्द्रो हनुमन्तमपृच्छत्; हे हनुमन्, केन भावेन केन स्वरूपेण वा मां चिन्तयसि? तदुत्तरेणाह, 'देहबुद्ध्यातु दासोऽहं जीवबुद्ध्या तदंशकः ब्रह्मबुद्ध्या त्वमेवाहमिति मे निश्चला मतिः। यावदहङ्कारो नापैति; तावत्; सेव्यसेवकभावो ग्रहणीयः। अहमिका तु मन्दा तिष्ठतु दासीभावेन। अहन्त्वंममत्वमिति द्विविधमज्ञानम्। यथा मम गृहम्, मम सम्पद् मम विद्या, ममैश्वर्यमेतत्सर्वमज्ञानकार्यम्। हे ईश्वर, त्वमेव कर्त्ता एतावदुपलभ्यमानमिदं सर्वं तवैव न ममास्ति किञ्चित् पुत्र कलत्र-स्वजन-गृह बान्धवाः सर्वं तवैव न ममेति बोधस्तु ज्ञानाज्जायते।

"किञ्च मृत्युः सदैव स्मरणीयः। मृत्युना सर्वे ग्रस्यन्ते। मृतस्योत्तरकालं नैवास्ति जगति किञ्चन वस्तु। न च वित्त-बान्धवादयो मृतमनुसरन्ति, निस्वं तं धर्म एव केवलमनुगच्छति। कर्मक्षेत्रमयः संसारः। वाणिज्यादि कर्मणे यथा देशाद्देशान्तरं व्रजति जनस्तथात्रसंसारे कर्मार्थमागमनं सर्वेषाम्। कर्मक्षये च क्षणमपि नैवावस्थानं सम्भवति कस्यापि। तथा हि—कश्चन

भृत्य: प्रमोदकाननं राजन्यागच्छति तन्मनस्तुष्टये वदति- हे राजन्, रुचिरमिदमुद्यानमिदञ्च सरोऽस्माकम्। सर्वमिदं समीक्ष्य प्रीतिमुपैतु भवान्। स यदा कदाचित् रोषवशात् राज्ञा सहसा विताडित: स्यात् तदोद्यानात् स्वपेटिकामपि नेतुमसमर्थो भवति- पूर्वं प्रभुसम: सन्नपि। राजा भृत्यान्तरेण तां पेटिकां तत्समीपं- प्रेरयति। (हास्यम्)।

अन्यच्च—ईश्वरो ममतापूर्णं वाक्यद्वयं श्रुत्वा हसति। तत्र यथा वैद्येन रोगिणो जननी सादरमुच्यते; मा भैषी:, अहं तव पुत्रमौषधेन नीरोगं करिष्यामीत्याकारमेकरूपं वाक्यम्। अविद्यादोषेण वैद्यो नैतच्चिन्तयन्ति, ईश्वरो यदि तं नरक्षेत् को रक्षितुं समर्थ:। यदा भ्रातरौ पृथक्करणाय स्वांशभूमिखण्डग्रहणाय च रज्ज्वा भूमिखण्डमुपमापयतः ममेदं भूमिखण्डं तव च खण्डान्तरमिति। तदेश्वरो हसतीति ताभ्यां नज्ञातम् सर्वं विश्वं मया सृष्टमतो ममैव वाक्यान्तरम्। अज्ञानत एव तयोर्ममेत्युक्ति: तदिदमीशस्य हास्यबीजम्।"

श्रीरामकृष्ण:-किमु तर्कबुध्या परमात्मा बोद्धुं शक्य: ? दासभावेन तं शरणं गत: सन् उपास्व श्रीरामकृष्ण: पुनरपि विहस्य विद्यासागरं कथयति; मदुक्तौ तव किमभिमतम् ? विद्यासगरस्तद् वाक्यं श्रुत्वा स्मितं कुर्वन्नाह; कदाचित् रहसि एकाकिनं भवन्तं वदिष्यामि। (सर्वेषां हास्यम्)। श्रीरामकृष्ण: पुनरपि-

हसन्नेव भाषते; तर्ककौशलेन पाण्डित्येन च तं न प्राप्नुवन्ति मनुजा: । एतदुक्त्वा प्रेमोन्मत्तेन भगवता परमहंसदेवेन यद्गीयत तदिदम्—

कोऽद्धा विवेद रुद्राणीं षड्दर्शन सुदुर्लभाम् ।
मूलाधारे सहस्रारे पद्मे तदुपलब्धये ।१।
योगिनस्तां विचिन्वन्ति मननेन निरन्तरम् ।
महापद्म वनान्तस्था हंसीहंसेन सङ्गता ।२।
रमते परमानन्दसन्दोहेन निरन्तरम् ।
आत्मारामस्य सैवात्मा मानः प्रणववद्भवेत् ३।
घटमातृषु सा देवी यथेच्छं खलु राजते ।
किमु ब्रह्माण्ड भाण्डानि मातुः कुक्षिगतानि भो: ।४।
किम्भूतानि प्रकाण्डानि विजानासि कथञ्चन !
रहस्यं त महाकालो वेद कोऽन्यस्तथा कथम् ।५।
तथाप्याह प्रसादस्तु जनहासमतर्कयन् ।
भुज सन्तरणञ्चाब्धे रेव जानन्मनो मम ६।
प्राणो न वेद येनासौ खवश्चन्द्रं जिघृक्षति ।

गानानन्तरं तेन भगवता पुनरुक्तम्—"कालिकाया उदरे निहितं ब्रह्माण्डं कियत् प्रकाण्डं जानासि किम् ? षड्दर्शन सुदुर्लभेत्युक्त्या पाण्डित्येन सा न लभ्येति स्फुटमुपलभ्यं सर्वेषामेव ।

"अपिचेश्वरलाभाय-भक्ति-विश्वासावपेक्षितौ । श्रद्धा–

माहात्म्यमाकर्ण्यताम् । कश्चित् लङ्कातर्त्तुकामं जनमुवाच विभीषणः । त्वमिदं द्रव्यं वस्त्राञ्चले निधेहि; उद्घाट्य मा पश्य । यद्यन्यथा कुर्य्यास्तर्ह्युदधौ निपतिष्यसि । स च यानादिकं विना विश्वासबलेन जलधिमञ्जसातिक्रामन् पथि व्यमृशत् । अहो ! किमिदमद्भुतं द्रव्यं येन पारावारस्योपरि गन्तुं शक्यते मया । एतद् विचिन्त्य वस्त्रग्रन्थिमुद्घाट्य केवलं 'राम रामे'ति लेखयुतं पत्रमपश्यत् । तत्रान्यत् किमपि नासीत् । तद्दृष्ट्वा आ ! इदं द्रव्यमिति भावयन्नविश्वासमापन्नो द्रुतमुदधौ मग्नो बभूव । लौकिका इमां गाथां गायन्ति-राम नाम्नि दृढविश्वासबलादेव हनुमान् सागरमुत्तीर्णः । रामचन्द्रस्तु स्वकृतसेतुनैवेति विशेषः । लब्धेश्वरविश्वासो जनः पापं महापापं वा करोतु; तथापि तस्य श्रद्धयाखिलपापविलोपाद्भय नास्ति । एतदुक्त्वा भक्तानां भावमारोप्य गायति स देवः । 'मरिष्यामि यदादुर्गा इत्यादिकन्तु प्रथमकथायां द्रष्टव्यम् ।

''भक्तिः शुद्धे ध्रुवमपेक्षणीये । भावविषयोऽपि भगवान् केवलं भक्तितो भवति सुलभः सर्वेषाम् । सचेश्वरं भावबन्धुर्भावविषयो भवति । अनुरागं विना तस्य कुतः प्राप्तिः ? तथोक्त्वातः परमहंसदेवो गीतं जगौ—

गेहे तमःसमाच्छन्ने यथोन्मत्तो निजेप्सितम् ।
हे मनस्त्वं तथा तत्वं किमन्विच्छसि सर्वथा ।१।

भावलभ्यं विना भावं नाधेयन्तद्भावत: ।
विधुमग्रे वशीभूतं कुरुते शक्तिलालत: ।२।

प्राभातिक प्रभातुल्य चित्तवृत्ति चयोदये ।
कक्षान्तः कृष्णगं तत्वं दुर्गमं हि भविष्यति ।३।

षड्दर्शनै रविज्ञेयं वेदतन्त्रादिभिस्तथा ।
तन्त्रसारैरलभ्यं तत् सत्यं भक्तिरसास्पदम् ४।
सानन्दं पुरि संराजन्महायोगी तदाप्तये
युगान्तकालं वहुलं चेष्टते योगतस्तु तत् ५।
यथायश्चुम्मको धत्ते लब्धभावमभेदत ।

श्रीरामकृष्ण एवं गानं कुर्वाण: समाधौ निमग्नः कृताञ्जलि: निर्निमेषो भूमिन्यस्तपादः पश्चिमास्यो भूत्वा काष्ठासनमाश्रित आगतैः सर्वै र्विस्मयेनावलोकितश्च। विद्यासागरोऽपि एकाग्रदृष्ट्यावलोकयति तम्। ततः समाधिभङ्गे श्रीरामकृष्णः प्रकृतिं गतः। दीर्घनिश्वासं क्षिपन् सहास्यः पुनरपि कथयति—भावभक्ति पदार्थौ भगवति प्रेमैव। साधको यदेव ब्रह्म तदेवहि मातेति नाम्ना सादरमुपास्ते। यथा च—

प्रसादः प्राह चित्त त्वं विद्धिमातृत्वया मया
यामृग्यते न सा ज्ञेया चत्वरे कुम्भभङ्गवत्
विज्ञेया सातु यत्नेन मत् सङ्केत विशेषत:

रामप्रसादश्चित्तं वदति, सङ्केतेन तां जानीहि। वेदैर्यत् प्रतिपादितं ब्रह्म तामेव मातेति नाम्नाहं स्मरामि। य एव निर्गुणः स एव सगुणः। यदेव ब्रह्म सा एव शक्तिः।

"यदा निष्क्रियतया तस्य बोधस्तदा ब्रह्मेत्युच्यते। यदासौ देवता जगत् सृष्टिस्थिति संहारादिकं करोतीति भावना जायते; तदा सैवाद्या शक्तिरिति कालीति च गीयते। अभिन्ने ब्रह्मशक्ती यथा-वह्नितच्छक्ती। दाहिका शक्तिर्वह्नेरभिन्ना-वह्निं बोधयति वह्निश्च तां शक्तिमुल्लेखवशात् तयोरेकतरस्य स्वीकारे परस्याङ्गीकारः सिध्यत्येव। मातरिति-ब्रह्मस्मृति साधनं परमप्रेमास्पदं तदीया प्रीतिरेव तां प्रापयति।

"तद्गतचित्तता नाम तत्प्रीतिः। अमृतसागरः सुधा-ह्रदोनाम। तत्र निमज्जने भाग्यवन्तो जीवा अमृती भवन्ति। केचन मन्यन्ते बहुधेश्वरभावना शिरोविकारं साधयतीति तद-युक्तम्। यतो वेदबोधिते अमृते तस्मिन् निमग्नस्य जीवस्य न मरणं परममरत्वं सिध्यति।

किञ्च यदा कस्यापि देव्यां मातरि अहेतुकी भक्तिर्जायते तदा तस्य वैधयागपूजायां नास्ति प्रयोज़नम्। यथा यावत् वायु-रनुपलभ्यस्तावदेव चामरापेक्षा, यदा स्वयं दक्षिणानिलः प्रवह-त्यलं व्यजनेन॥ त्वया यत् कृतं कर्म तत् सर्वं सदेव। अहमिकां विहाय सङ्गं त्यक्त्वा वा निष्कामभावेन यतसे चेत्; तत्र महान्

लाभस्ते भविष्यति। अनेन कर्मणा ईश्वरे भक्तिस्तत्साक्षात्-कारश्च घटते। अपितु यथा यथा भक्तिवृद्धिस्तथातथा कर्म-क्षयो भवति। यथा यदान्तःसत्वा बधूः प्रसवकालस्य सान्निध्यं क्रमेण लभते; तदैव तस्याः कर्मभ्यो विरतिरतितरां श्वश्र्वा विधीयते। वधूर्यदा सुतं सूते; तदा शिशुपालनवेलायां नान्यत् किमपि कर्म कुरुते। पूर्वमासन्नप्रसवा तु सा न किञ्चित् कृतवती। श्वश्र्वपि गर्भस्थ शिशुहिताय तां कर्मभ्यो निवारयति। (हास्यम्) त्वया यत् कृतं कर्म तेन कर्मणा विहितं हितमात्मीयम्। मनुजा-न जगत उपकर्त्तुं प्रभवन्ति। अपितु ईश्वर एव सर्वोपकारकृत्। यः सूर्य्याचन्द्रमसौ, पित्रोः स्नेहः; साधुषु भक्तिः, महत्सु च दये त्येतत् सर्वं विदधे, जगत् रक्षति पालयति जनानां शुभाशुभे कर्मफलञ्च विधत्ते। अतो जगद्धिताय निरपेक्षां चिन्तां मा कुरु। त्वं स्वस्य स्वर्णमयं मानसं न जानीषे।

"तत्र मृत्तिकाप्रायमस्त्यावरणम्। ततो न तत् साधु वेत्सि। परिज्ञाते तस्मिन् कार्यान्तरं तदावश्यं ह्रासं गच्छेत्। तूर्णं सिद्धिपथमुपैहि। वधूर्यदा सुतं सूते तदा तत्पालन-मन्तरा नान्यत् किमपि कुरुते। श्वश्रूर्गृहोचित कर्मभ्यो निवार-यति ताम्। (सर्वेषां हास्यम्)।

"दूराद्दूरं याहि। यथा—कश्चित् ब्रह्मचारी वनस्थितं काष्ठार्थिनं सूत्रधरमुवाच। दूरं वनं गच्छ। तथोपदेशं

गृहीत्वा क्रमेण दुर्गमं गहनं प्रविष्टः सन्नपश्यत् सुरभिचन्दन-वृक्षान्। ततो दूरे गभीरतमेऽरण्य प्रदेशे रौप्याणामाकरं ततः-सुवर्णानां ततो हीरकमाणिक्यादीनामाकरजातं क्रमेण समुपलभ्य ततस्तान् वनादानीय विक्रीय च कुवेर इव समृद्धो बभूव। तथैव निष्काम कर्मवशादीश्वरे प्रीतिर्जायते; ततस्तया तत्कृपया तस्य दर्शनं घटते। प्रत्यक्ष विषय एवेश्वरः। तेन सह प्रत्यक्षं वार्त्तालापं कर्त्तुं शक्नुवन्ति मानवाः। यथा-त्वया सहाहं कथयामि तद्वत् (सर्वे निस्तब्धाः)"।

'तत्रत्याः श्रोतारः श्रीरामकृष्णमुखनिःसृतामसृतमयीं वाणीं स्मारं स्मारं पायं पायञ्च निमग्नाः कथायाम्। रात्रिस्तदा प्रवृद्धासीत्। अतः श्रीरामकृष्णो दक्षिणेश्वरं जिगमिषुः सहास्यं विद्यासागरं वदति। मया यदुक्तं तत्सर्वं भवताज्ञातम्। मम भाषणं तावदाधिकमात्रम्। तथापि नात्मीयतया स्वीकृतं तत्। यथा निधिपतिर्वरुणः कियत्रत्नं विद्यते ममागारे इति न जानाति तद्वत्।

विद्यासागरः—सहास्यम्, भवता एवं वक्तुं शक्यते।

श्रीरामकृष्णः—यत्र क्वचन दिने राणीरासमणिकृतं मनोहरमुद्यानं द्रष्टुं गच्छतु भवान्।

विद्यासागरः—गमिष्याम्येव यतो भवन्तः समायाताः कथमहं न गन्तास्मि ?

श्रीरामकृष्ण—आ: किमेतदुच्यते मम समीपमिति ?

विद्यासागरः—ज्ञापयतु मां किमर्थमियमुक्तिस्तत्र भवताम् ।

श्रीरामकृष्ण:—वयन्तु मीनार्थिजलयान कल्पा: । नाव्यदेशे-मात्रे क्षीणे जलाशये सरसि नद्याञ्च गन्तुं शक्ता: । भवान-र्णव पोत: कथं गमिष्यति ?

गच्छन् यदि तत्रगति रोधिनी मुत्तान भूमिं क्षीण जल स्थली-म्वाप्नुयात् । हसन् पुनरपि प्राह; तथाप्यस्मिन् ऋतौ अर्णव-पोतोऽपि गन्तुं शक्त: ।

विद्यासागर:—सहास्यम्, एवमृतुरयं वर्षाणाम् ।

अनेन प्रकारेण परस्परमच्युतोदारकथायां समाप्तायां ततो गन्तुमुद्युक्त: श्रीरामकृष्णो विद्यासागरस्याध्यात्मिककुशले-च्छया मूलमन्त्रं जपति । ततः स्वजन परिवृतो विद्यासागरः श्रीरामकृष्णमभ्यवादयत् । भक्त परिवृत. परमहंसदेवो राणी-रासमणिमन्दिरमश्वशकटेन प्राप्त: । (१)

---

(१) श्रीश्रीरामकृष्ण कथामृतस्य तृतीयभागस्य प्रथम-खण्डस्यायमनुवाद: ।



# तृतीयकथा

## श्रीयुक्त केशवचन्द्रेण सार्द्धं श्रीरामकृष्णस्य नौकाविहारः

द्व्यशीत्यधिकाष्टादश शततम खीष्टाब्दीयाक्टोवरमासस्य सप्तविंशद्दिने शुक्रवारे आश्विन (कोजागर) पौर्णमास्यां तिथौ दक्षिणेश्वर कालिमन्दिरस्य सन्निहिते गृहे श्रीरामकृष्ण परमहंसदेव उपविष्ट आसीत्।

तदा श्रीमत्-केशवचन्द्रस्य शिष्या आगत्य परमहंस देवमुचुः 'महात्मन्; केशवचन्द्रा सवान्धवः अर्णवयानेनगङ्गातीरमागताः। भवन्तं नेतुं तैरेव प्रेरिता वयम्। सानुकम्पं भवता गन्तव्यम्'।

तच्छ्रुत्वा परमहंसदेवो गन्तुं प्रवृत्तस्तरणियोगेनार्णवपोताप्तये। तरणिं प्राप्तःसन् समाधिमाप। स च समाधिः-सर्वेंद्रियोपरमः प्रकृतिविकृतिशून्यो भावनातीतरूपः। अथार्णवयानमापन्ना तरणिः। तद् दृष्ट्वा तत्र ये समुपस्थितास्ते अहरहःसमाधिमग्नं पुरुषमद्भुतं परमहंसदेवं द्रष्टुं समुत्का बभूवुः।

तत आगतं निरुद्धचित्तवृत्ति परमहंसदेवं दृष्ट्वोद्विग्न-मनाः केशवचन्द्रस्तरसा अर्णवयानं तमानिनाय। विगत समाधिरपि परमहंसदेवो भावमग्नः सन्नस्फुटवाक् आसीत्। तदानीमपि नैव प्रकृतिं गतः। तेनास्फुटवाचा स्वयमेव प्राह हे-मातः; कथमत्रानीतोऽस्मि। किं वेष्टन्यावद्धानेतात् जनान् रक्षितुं शक्नोमि ?

कश्चित् ब्राह्मसमाजभक्तः सादरमवदत्—हे महात्मन्ः गाजिपुरस्थानवासी पाओहारिबाबा नाम साधुरेभिदृष्टः। सतु भवत् सदृश एव। भावमग्नः श्रीरामकृष्णो गदितुमशक्तोऽप्येतत् श्रुत्वा स्मितमकरोत्।

पुनश्चाह ब्राह्मसमाजभक्तः—हे महात्मन्; तेन साधुना स्वगृहे भवत्प्रतिकृतिः स्थापिता। श्रीरामकृष्णो मन्दं हसन् स्वाङ्गमङ्गुल्या निर्दिश्य कथयति-"इदं शरीरम्।" शिर्षोपधान-तदावरणयोरिघात्मशरीरयोरेकस्य शरीरस्यानित्यत्वं व्यक्त-मेव। देही त्वविनाशी। अतः स्थापितप्रतिकृत्यालम्। य एवा-न्तर्यामीश्वरः सर्वभूतेषु विराजते स एवोपास्य इति।

"प्रचरति तथाप्येव प्रवादः। भक्तानां हृदीश्वरावास इति। स तु सर्वभूतेषु विद्यमानोऽपि भक्तचित्तकमले विशेषेण विरा-जते। कश्चित् भूस्वामी स्वाधिकृतस्थानेषु वर्तमानोऽपि तस्य-

वासगृहे एव प्रायशस्तिष्ठति इति यथा विशेषनिर्देशो भवति स्थान निरूपणाय (हास्यम्)

"ज्ञानिनो यं ब्रह्म वदन्ति, योगिनो यमात्मेति, भक्तास्तमेव हि भगवानिति कथयन्ति। एक एव ब्राह्मणो यदा पचति तदा पाचक इति यदा पूजयति तदा पूजक इति, लौकिकानां व्यवहारः। अपिच ज्ञानयोगावलम्बिनो ज्ञानिनः कार्यकारणयोरभेदं जानन्तः सर्वं खल्विदं ब्रह्मेति विज्ञायापि अज्ञानतत्कार्य्यमात्रं न ब्रह्मेति नेतितिरीत्या सर्वविषयप्रतिषेधेन सच्चिदानन्दं ब्रह्म प्रत्यक्षीकर्त्तुं समाधिमग्नाः सन्तः परमं मुक्तिं समुपलभन्ते। किञ्च-ब्रह्म सत्यं जगत् मिथ्या इति निश्चेतुं नामरूपात्मकं जगत्; मायामरीच्युदकगन्धर्वनगरीतुल्यं जलबुद्बुद्वत् क्षणस्थायि परं निर्गुणमपि ब्रह्म कालत्रयाबाध्यतया स्वप्रकाशतया च सत्यमिति वदन्ति।

"येतु भक्ताः (द्वैतवादिनः) तेतु वेदान्तिन इव जगत् स्वप्नवत् इति न वदन्ति। ईश्वरस्य विभूतिमात्रमिदं जगत्। आकाश-ग्रह नक्षत्र-चन्द्र-सूर्य्य-पर्वत-समुद्र-शरीरेन्द्रियादयः सृष्टास्तेन स्रष्ट्रा, ऐश्वर्य्यमिदमिति च वदन्ति। किञ्च सहीश्वरः सर्वस्यान्तर्बहिश्च विराजते। य एव भागवतोत्तमः स परमात्मा तु जीवजगच्चतुर्विंशति तत्त्वभूतं पश्यति। भक्तानां कामना तु

शर्करामत्तास्मि एवेत्याकारा; नतु शर्करा भवामि भविष्यामि वेत्याकारिका।

"अपिच भक्तस्यैव स्वभावः—हे भगवन्; त्वमेव प्रभुः; तव दासोऽहम्; त्वमेवपूर्णस्तदंशकोऽहम्; त्वमेव माता अहं तव पुत्र इति सुस्थिरो बोधः। अहं ब्रह्मास्मि इति वक्तुं नेच्छति भक्तः।

"योगिजनोऽपि परमात्मनः साक्षात्कर्त्तुं यतते। यत्नफलं जीवात्मनः परमात्मना संयोग एव। सचेन्द्रियाणि संयम्य निरुद्ध-चित्तवृत्तिः सन् रहस्यासनादिकं कृत्वा यमादिसमाध्यन्ताष्टाङ्ग योगेनाक्षरं परमात्मानमवलोकयितुं यतमानः सन् योगीति नाम्ना प्रसिद्धिमेति।

"भवतु वेदान्ती-भवतु भक्त भवतु योगी; इमेसर्वे तमाप्तुं चेष्टन्ते। एकमेव हि ब्रह्म नाम्ना भिद्यते, यदेव ब्रह्म, स एवात्मा स एव भगवान् इति। वेदान्ती ब्रह्म इति; योगी परमात्मा इति, भक्तश्च भगवानिति तत्वमेकं बहुधा बहुधा वदन्ति बहवः।

अथ श्रीरामकृष्णोब्रूते—वेदान्तवादिनो वदन्ति-जगत् सृष्टिस्थितिप्रलयादिकं सर्वं त्रिगुणमय्याआद्यायाः शक्ते लीलैव। विचारणया तु इदं सर्वं स्वप्नवत् मिथ्या, ब्रह्मैव वस्तु अन्यत् सर्वमवस्तु शक्तिरपि न वास्तवीति।

"किन्तु कुर्वन्तु ते शतं सहस्र' विचारतर्कावतारणां समाधि सिद्धि विना शक्तेरधिकारो दुस्तरो दुरतिक्रमश्च । श्रवणमननादीनि कर्त्तृक्रियाकारक फलानिच सर्वाण्येतानि शक्तेरधिकारे वर्त्तन्ते । अतः—शक्तिमता ब्रह्मणा शक्तेरभेदश्चिन्तनीयः । एकस्य स्वीकारे अपरं स्वीकर्त्तव्यम् । तत्रोदाहरणमग्निस्तद्दाहिका शक्तिः यथावा—सूर्य्यस्तत्किरणचयश्च । दहनस्य स्वीकारे दाहिकाशक्तिस्तथासूर्य्याङ्गीकारे किरणराशि रपश्यमङ्गीकार्य्या । दाहाद्यनुकूलशक्तिकिरणचयौ विहाय नाग्निसूर्य्यौ कैरपि कथमपि चिन्तयितु' शक्यौ ।

"कीदृशं दुग्धमिति प्रश्नस्योत्तर' धवलवर्णमिति । यथा दुग्धं विना दुग्धगत' धवलत्व' धवलत्वं विना वा दुग्ध' भावयितु' न शक्यम् तथा ब्रह्म विहाय शक्तिं शक्तिं विहाय वा ब्रह्म; नित्यं परित्यज्य लीलां' लीलां परिहाय च नित्यं चिन्तयितु' कैरपि शक्यते ।

"विचित्र लीलामयी सृष्टिस्थिति संहारकारिण्याद्याशक्तिः कालिकैव ब्रह्म; ब्रह्मैव काली-द्वयोर्मध्ये भेदोनास्ति । यदा जगत् सृष्टिस्थितिप्रलयादिक' करोति तदा कालिका शक्तिरिति कथ्यते । यदातु सा पूर्वोक्त सृष्ट्यादिक्रियाकारक बर्ज्जिता तदा ब्रह्मइति निर्द्दिश्यते श्रुत्या ।

"किञ्च कस्यापि सरसश्चतुर्थ्यवतरण स्थानेषु प्राप्तेषु स्नान पानाद्यर्थमेकत्र स्थिता खीष्टीया जनाः पानीयमाहृतम् ओया-टार' इति नाम्ना निर्दिशन्ति। अन्यत्र स्थिता यवनास्तदेवाहृत 'पानी'-इति नाम्ना कथयन्ति; आर्य्यास्तु समाहृत तदेव 'जल-मिति' समुल्लिखन्ति। तद्वत् एकमेवहि–केचित्-'आल्ला'इति; केचित् 'गड्'इति; केचित् 'ब्रह्मे ति'; केचित् कालिकेति; केचित् 'हरि'; 'यीशु'; दुर्गेतिवा नामभेदेन व्यवहरन्ति। वस्तु-गत्या एकमेव तत्त्वम्।

हसन्नेव केशव चन्द्रः पृच्छति—हे महात्मन्; ब्रवीतु भग-वती कालिका देवी केन प्रकारेण कैःकैर्भावैश्च मूर्त्ति परिगृह्य जगति क्रीडति ?

श्रीरामकृष्णः—सा विविधैर्भावैर्लीलां करोति। सैव महाकाली-नित्यकाली-श्मशानकाली-रक्षाकाली श्यामकाली-त्येव विविधनामभि र्निर्द्देश्या भवति। तन्त्र शास्त्रेषु तत्परि-चयो वर्त्तते। यदा जगदिदमेवं नासीत्; चन्द्र-सूर्य्यग्रह पृथिव्यादिकं किमपि न बभूव, तदा निविडान्धकारे अव्यक्ता-चिन्त्या निराकारा महाकाली महाकालेन सह विरेजे।

"श्यामाकाली तु कोमला वराभयधारिणी। यदा महामारी-दुर्भिक्षभूमिकम्पानावृष्ट्यतिवृष्ट्युत्पातादिकः प्रादुर्भवति;

तदा मानवाः परित्राणाय स्वगृहे रक्षाकालीं पूजयन्ति। श्मशानवासिनी श्मशानकाली सर्वसंहाररूपिणी घोररूपा गलधृतमुण्डमाला शवशिवाडाकिनीयोगिनीपरिवृता रक्तवदना कटिवन्धननद्ध मनुज हस्ता। जगति विनष्टे यदा महाप्रलयो भवति तदा गृहिणीवत् सा माता सृष्टिवीजान्यादाय स्वस्मिन्नुपस्थापयति। एतच्छ्रुत्वा केशवादीनां हास्यम्।

हसन्नेव परमहंस देवः पुनरपि कथयति–एवमेव, एवमेव। गृहिणीनां नाना वस्तुपरिपूर्णो भाजनविशेषो विद्यते। तस्मिन् भाण्डे विभिन्न वस्त्रखण्डग्रथित नीलगुटिकासमुद्रफेन कर्कारुकर्कटी कुस्माण्डवीजादिकं निदधति। यथाकार्य्यं तानि व्यवहरन्ति ताः। इत्थं ब्रह्मस्वरूपिण्याद्या शक्तिर्जगति विनष्टे वीजान्यादायात्मनि निदधाति; पुनः प्रलयान्ते च जगत् प्रसूते। जगद्रूपेण च सैव भाति। वेदेषूक्तञ्च-यथा-लूताकीटः स्वशरीरात् तन्तून् वहिः प्रसारयति पुनस्तानेव गृह्णाति। यत्र च विश्वं या च विश्वे सैषा देवता।

"अपिच कृष्णवर्णत्वात् किं काली सा? नह्येवम्, दूरात् प्रतीयते कृष्णवर्णेति। तस्याः साक्षात्कारे सिद्धे न रूपादिकं नवा परं गुणादिकं किञ्चित्। यथा–आरात् नील रूपरहितं समुद्रस्य तोयं नीलमिति। यथा वा नीरूप अकाशो दूरात् रूपवानिव प्रतिभाति"।

श्रीरामकृष्णः— किञ्च (केशवादीन् प्रति) सा बन्धमोक्षयोः कर्त्री। तन्मायया कामिनी काञ्चनादिरूपया जीवो बध्यते; पुनस्तत्कृपया च मुच्यते; अतः सा भवबन्धनहारिणी तारिणी च एतदुक्त्वा निन्दितगन्धर्वकण्ठः श्रीरामकृष्णो राम—प्रसाद कृतं गीतमगायत्—यथा

संसारहट्टस्थित जीवजातं क्रीडास्थलन्ते प्रतिभाति मातः।
वात्येरितं सूत्रनिबद्ध वस्त्र घुडीति भाषा प्रथित' शिशोर्यत्।
तथैव कामानिल जालचाल्यं मायैकदामापि गुणैरनेकैः।
विनिर्मित' कारु सुचारु कृत्यं काकादि पक्षैरिव घोरनाडी।-
वृन्दै युत' वस्त्र विमाज जितञ्च च्छिन्नं तत. किञ्चन लक्ष्यतश्चेत्।
त्वं हस्ततालं हससीव मातः तद्दक्षिणा वात विचालितं सत्।
इतं भवाब्धेः पर पारगामि भविष्यतीत्य ह प्रसाद एषः।

"सा लीलामयी, जगदिदं तस्याः क्रीडास्थानम्। तत एव आनन्दमयी वञ्छामयीच। पुरुषाणां लक्षेषु कस्मै वा मुक्तिः प्रददाति।

ब्राह्मसमाजभक्तः—हे महात्मन्; स्वेच्छामात्रेण सर्वान् मोचयितु' समर्थोऽपि कथं न तथा कुरुते; कथम्वा संसारे आबद्धा वयम्?

श्रीरामकृष्णः—तस्या एवेच्छा बन्धमोक्षयो र्निदानम्। लोकाः क्रीडन्तु; तैः सह ममापि खेलनमस्तु इत्येवमस्ति तदीयेच्छा। खेलामपरिसमाप्य यदि सर्वे तां स्पृशेयुः कथं खेला स्यात्। (१)

१ यथा चौर्याख्ये बालकेलिविशेषे वृद्धाइति व्यवहारभाजः

स्पृष्टेषु सर्वेषु तस्या खेला नचलति। सा तु क्रीडा समाप्ति नाभिलषति , तद्वत् क्रीडन वेलायां सा मुक्ति न साधयति। तत्रापि कदापि कस्यापि भवति मुक्तिः। किञ्च सा नेत्रसङ्केत व्यक्तेच्छा विशेषेण मनांसि संसारं प्रापितवतीति मनसां को दोषः। पुनश्च यदि करुणया सा मनांसि संसार-विमुखानि कुर्यात् तदा तेषां जगन्मातुः पादसरोजे मतिरुपजायते।

पुनश्च श्रीरामकृष्णः संसारीव साभिमानं गायति। यथा—

ततः खेदं व्रजाम्यम्बा त्वयि मातरि यन्मम।
त्वन्नाम करणे वाञ्छा विलुप्ता त्वन्तरान्तरा॥
यथा जाग्रज्जनागारे चौर्य्यं तद्वत्तवैव सा।
चातुरीत्यवगच्छामि युक्ति प्रत्यक्ष योगतः॥
किञ्चिन्न दत्तं नैवाप्तं न नीतं नापि भक्षितम्।
किमु दोषः समे मात द्दत्ते प्राप्ते च भक्षिते॥

---

कस्यापि क्रीडा परस्य स्पर्शः। परेषां क्रीडतां बालानां चौरत्वसम्भावनाच्छेदाय भवति। परन्तु बद्धनेत्रचौरसमाख्यः कश्चित् वृद्धाया रक्षकःसन् वृद्धास्पर्शोत्सुकं यदि स्पृशति तदा स्पृष्ट एव चौरो भवति; स्पर्शकृत्तु भवति चौर्य्य-मुक्तः।

गृहीते च त्वया मन्ये दानञ्च मम भोजना।
दुर्यशः सुयशश्चापि रसाश्च विविधास्तत्र॥
रसस्था तु रसच्छेदं कुरुषे किं रसेश्वरि।
प्रसादो वक्ति चित्तं मे चालयस्यक्षिपाततः॥
सृष्टौ ते दृष्टि दग् धायां शुभबुद्ध्या भ्रमाम्यहम्।

ब्राह्मसमाजभक्तः—महात्मन्, सर्वार्थ त्यागमन्तरा किमीश्वरः सर्वेषामप्राप्य एव ?

श्रीरामकृष्णः—हसन्नाह—मैवं युष्माकं सर्वार्थत्यागो नापक्षेणीयः। रसनिष्ठा यूयं साधु तिष्ठथ सा, रे, गा, मा, इत्यादि शब्दबोध्येषु स्वरेषु स्वर साधकानां यथा, तथा युष्माकं स्थिति रुचिता वर्त्तते। नक्साख्यां खेलां जानीथ किम् ? सर्वमिदं पतन स्थानमतीत्य प्रदीप्तोऽस्मि। यूयं तावत् सुचतुराः, यतो विषयेषणादिकमत्यजन्तो नक्साख्यखेलायां तिष्ठत युष्माकं कश्चित् दशसु षट्सु, कश्चित् पञ्चषु क्रीडतीति—युक्तं यूयं क्रीडापरास्तिष्ठथ। मत् समं सर्वार्थोच्छेदं नानुतिष्ठन्तु श्रीमन्तः। यूयं नैव निर्दग्ध संसाराः भवत दैवी लीला तावत् स्फुटं प्रचरति रुचिरमेतत्। (हास्यम्)।

"सत्यं वदामि युष्माकं संसारकृति र्नदोषाय। अपित्वीश्वरे परमात्मनि मनः स्थापयितव्यम् तेनैव दोषच्छेद-

स्तदभावे तु दोष: स्यादेव। हस्तैकेन कर्माणि कुरु हस्तान्तरेण ईश्वरमवलम्बस्व, समाप्ते कर्मणि द्वाभ्यां दोर्भ्यामीश्वरमाधातुं यतस्व।

"मनएव सर्वम्। रजकवस्त्रवत् येन रागेण मनः संसक्तं स्यात् तत्तदाकारं भवति। रञ्जकः वस्त्राणि रक्तेन पीतेन शुक्लेन नीलेन वा रञ्जयति। येन केनापि रूपेण रञ्जयितुं शक्यं यथा वस्त्रं मनस्तथा विविधविषयकरागेण लक्षितं स्यात्। कश्चित् पुरुषो यद्याङ्गलभाषां शिक्षेत् स फुट् फाट् इट् मिट् इत्याकारिकां भाषां वदेत् (हास्यम्)। अन्यश्च यदा कश्चित् चर्मनिर्मितपादुके परिदधाति तदा मुखे सस्वरं गायति गानम्। अपिच यदा संस्कृतशास्त्राणि पठति तदा श्लोकान् उच्चारयति। यदि कश्चित् कुसङ्गेन कालं नयेत्; तर्हि संसर्गजा दोषगुणा भवन्ति इतिन्यायात् कुत्सिताः संलापकथाचिन्ताः सम्पादयेत्। यदि कश्चित् सत्सङ्गादिकं कुर्य्यात् तदा तत् फलमीश्वर चिन्ता तत्कथादौ श्रद्धा रतिश्च-जायते। किञ्च एकस्यापि मनसः संस्कारभेदात् स्त्री-पुत्र-कन्येति भेदबुद्धिर्भवति तत्र तत्र।"

श्रीरामकृष्णः—जनस्तु मनसैव बद्धो मनसैव मुक्तो भवति। "मुक्तोऽहं राजाधिराज ईश्वरस्य पुत्रोऽहं यत्र यत्र स्थितोऽपि संसारे अरण्ये वा को मां वध्नीयात्? सर्पदंशने-

जातेऽपि विषं नास्तीति दृढ़ं यदि सर्वेषामभिमतं स्यात् तर्हि विष कार्य्यमपि दूरीभूतं स्यात्। तथैव नाहंबद्धो मुक्तोऽहमिति मुहुरतिदृढं कथयन् मुक्तो भवति।

"एकदा कश्चित् पुरुषो मह्यमेकं खीष्टीयं पुस्तकं ददौ। दातारमवदं किंवास्ति तत्र पठित्वा श्रावय। तत्र तु पापं पापमिति निबद्धमासीत्। (केशवचन्द्रं प्रति) युष्माकं ब्राह्मसमाजेऽपि सैवोक्तिः पाप्यहमिति। यो बद्धोऽहमिति वदेत् स बद्ध एव भवति। योऽहरहश्चिन्तयेदहं पापी; अहंपापीति स तथैव भवति।

"ईश्वरनाम्नि एतावती श्रद्धा कर्त्तव्या, यत् मयेश्वरस्य नाम गृहीतम् तेन मयि पापं कथं सम्भवति? किमु पुनर्बन्धनं नाम? कृष्णकिशोरनामा सदाचारनिष्ठः कश्चित् ब्राह्मणो वृन्दावनतीर्थदर्शी एकदा वृन्दावनं परिभ्रमन् जलपिपासुः सन् आरात् कूपं तत्र च पुरुषं कमपि पश्यन् उवाच। अये कूपात्जलमाहृत्य मह्यं दातुं शक्यते? का ते जातिः? स प्राह महत्मन्, चर्मकारोऽहम्; जात्या हीनः। स च ब्राह्मणस्तमुवाच त्वमादौ शिवेत्युक्त्वा जलं देहि। यतो भगवन्नाम करणेन लोकाः शुद्धा भवन्ति। केवलं पापमिदं नरकमिदं कथमुच्यते। उच्यतां तावत् यत्कृतं दुष्कृतं कृतमतः परं कदापि न करिष्यामीति।

तथा भगवति तन्नाम्नि च श्रद्धां स्थापय। एतदुक्त्वा परमहंसदेवः प्रेमोन्मत्तः नाम माहात्म्यः सङ्गीतं गायति—

मरिष्यामि यदा दुर्गा दुर्गेत्युक्त्वा तदा कथम्
न विधास्यसि मे त्राणं दीनस्य भवगेहिनी इत्यादिकम्

"एकदा मातरं केवलां शुद्धां भक्तिं ययाचे। पुष्पाणि मातृपाद पद्मे दत्वा अवोचम्; हे मातः; पापपुण्ये गृहाण; शुद्धां भक्तिं प्रयच्छ, इमे शुच्यशुचिनी गृहाण, शुद्धां भक्तिं प्रयच्छ। (ब्रह्मभक्तान् प्रति) श्रूयतां रामप्रसादकृतं गानम्। यथा—

हे-चित्त ! त्वमिहागच्छ कालीकल्पतरो मूलम्
चतुर्वर्गफलं लब्धुं चिरं सञ्चर सर्वथा ।१।
प्रवृत्तिश्च निवृत्तिश्च पत्नी किन्तु सदानुगा।
निवृत्तिस्तु ते तस्या विवेकाख्यः सुतस्तु यः ।२।
तं तत्ववार्त्तां पृच्छ त्वमथ शुच्यशुचि द्वयीम्।
विरोधहीनां संगृह्य दिव्यभावमुपागतः ।३।
महाराधनया देवीं श्यामां पश्यामि मोक्षदाम्।
मायाहङ्कारयोः पित्रोः कुरुनिर्वासनन्तथा ।४।
शङ्का ते मोहगर्त्तेषु पतनस्य यदा तदा।
धैर्य्यस्तम्भं गृहाणाथ पापपुण्याजयो द्वयोः- ।५।

उपेक्षा कीलके वद्धं कुरु तेनास्तु वध्यता।
नोचेद् बोधासिना च्छेदं विधेहि त्वथ दूरतः ।६।
पूर्वभार्यापत्यवृन्दं प्रबोधय विशेषतः।
बोधस्तस्य न जातश्चेत् बोधाब्धौ तं निमज्जय ७
तथात्वे चित्त ! ते भूयात् कालं प्रति सदुत्तरम्।
सर्वेषां मान्यता साधु चित्तता च भविष्यतः ।८।
चित्तस्येदं परं तत्त्वं प्रसादो वक्ति मानसम्।

ततश्च—गृहे स्थितस्य ईश्वरलाभः कथं न भवेत् ? राजर्षि-जनकस्य साक्षात्कारोऽभवत्। परन्तु शुद्धाभक्तिर्यदि जायते तत्पादपद्मे तदा (आत्मदृष्ट्या) संसारोऽयमानन्दाकरो भवति भगवन्तं साक्षात् कुर्वतो जनस्य। तथाच लोकप्रवाद-एषः।

भिषक्बुद्धिर्न ते भाति चेतसि सामान्यतो यतः।
कुटीरं हि सुखस्यायं संसारः सर्व वैभवः।
जनकस्तु माहातेजा राजेहच परत्र च।
सुखोपायं सुसम्पाद्य सुखं दुग्धमिवापपौ।

"अपितु सहसैव निर्लिप्तब्रह्मवेत्ताराजर्षिजनक इव भवितुं नार्हति। कथम् ? सतु रहसि दीर्घकालमात्मानुचिन्तया कठोर तपसा नियुक्तो विरक्त कृतकृत्यो बभूव। तथैव गृहीभूत्वापि गृहे स्थित्वापि च यथावसर गृहात् बहिः कान्तारं

गच्छन् ईश्वर चिन्तनं तद्ध्यानं तत्प्राप्तये दृष्टये च कुर्य्यात्। किञ्च तत्प्राप्तये निभृतदेशं गत्वा त्रिदिनं दिनमेकम्वा क्रन्द्यात् तच्चिन्तातद्ध्यानपरायणो भवेत्; तर्हि साधक-गृहस्थस्य महान् लाभः। पत्नी पुत्राद्यर्थे लोकाः पूर्णघटीपरि-मित रोदनाश्रु सिञ्चन्ति; परन्तु के वा ईश्वरार्थे क्रन्दन्ति ? संसारे वैषयिक कर्मणि साधकावस्थायाञ्च बहुविघ्न वशात् पर-मात्मनि ईश्वरे मनः स्थिरं न भवति। यथा वेष्टनीं विना गुल्मान् पशवः खादन्ति। परिपुष्टेषु वर्द्धितेषु वृक्षेषु तेषु यदि हस्तिनं तत्र रक्षेत् तथापि न काचित् तेषां हानिः। तदा तेषा-मावरणं नावश्यकं भवेत्। तथैव तपसा परिपक्वे मनसि केचित् गृहे संसारे वा वसेयुश्चेत् तेषामनिष्टं न भवति।

"अपिच तीव्रव्याधिग्रस्ता इव संसारिणः। सन्निपात-ज्वर पीडितानां पुरुषाणां गृहे जलपूर्णघटोऽम्लरसपूर्ण कलसश्च यदि विद्येयातां, तर्हि कथन्ते अरोगा भवितुमर्हन्ति। रोगोच्छेदं कर्त्तुमिच्छसि चेदपसारय तौ घटौ तेषां गृहात्। तथैवच भव-रोग ग्रस्तानां संसारिणां जल पूर्णघटसदृशा विषयाः रोग-पिपासा इव विषयोपभोगतृष्णा, विषयासक्ति दोषात् इन्द्रिया-णि सततं चञ्चलानि, स्वरूपाज्ञान दोषात् कामिनीकाञ्चना-सक्ता मोहमुग्धाश्च प्रायेण जनाः। अम्लरसस्य मनसा स्मरणे-नापि पूर्वानुभूत इव रसो जिह्वाया निःसरति। अतः कलत्रादि

सङ्गं विहाय भवरोगप्रशमनाय च परमागदनिर्ज्जनावासेन चिकित्सा कर्त्तव्या।

"किञ्च विवेकवैराग्ययुक्तः सन् संसारे स्थातुमर्हति। अस्मिन् भवार्णवे कामक्रोधाद्यात्मका ग्राहा विद्यन्ते। यथा-स्वाङ्गे हरिद्रालिप्तः सन् यद्यवतरेज्जलं सामुद्रं तर्हि नक्राद्या न स्पृशेयुः। तथैव विवेकवैराग्यादयः हरिद्रासमाः। अपिचेश्वरे या प्रीतिरनुरक्तिः सा प्रेमरूपा। गोपीनां श्रीकृष्णे अनुरागा-त्मिका भक्तिः कीदृश्यासीत्? श्रूयतां गानमेतदुक्त्वा परहंस-देवो गायति—

वंशी नदति कृष्णस्य कानने पथवर्त्तिनः।
ततो मे गमनं तूर्णं यूयं किमु गमिष्यथ।१।
स वो वाक्यं पुनश्चित्तं ममापूर्व्यं विराज ते।
वंशी वः कर्णयो रौति चित्तमध्यगतस्तु मे।२।
सख्यः प्राहुस्तदा राधे! वेणुनाद समाकुलम्।
वरकुञ्जं न तस्यास्ति शोभा काचित्त्वया विना।३।

"इदं गायन् जातगाढानुरागाश्रुपूर्णनयनयुगलः श्री-रामकृष्णोऽब्रवीत्। हे ब्राह्मभक्ताः! किमु राधाकृष्णौ युष्माभिरभ्युपगम्येताम्? तदनभ्युपगमे युष्माकं न काचन हानिः स्यात्। परन्तु गोपीनामिव गाढानुरागात्मिका भक्ति-

गृह्यताम्। येन तद्वत् तीव्रविरहबोधो भविष्यति तल्लब्धये यतस्व। तीव्रविरह बोधवता पुरुषेण प्राप्तुं शक्यते ईश्वरः।

अनेन प्रकारेण समुपस्थिताः श्रोतारो भ्रमराइव श्रीराम-कृष्णामृतकथायां निमग्ना आसन्। ते चार्णवपोतस्य गङ्गायां गतिरगतिर्वेति ज्ञातुमशक्ताः। अर्णवयानन्तु शनैः शनैः दक्षिणेश्वरदेवालयादिकं विहाय कोम्पानिनामकोद्यानाभिमुखं गच्छति। तेनार्णव पोतचक्र विक्षुब्ध तरङ्गायित फेनिल कल्लोल-गाङ्गवारिशब्दा जायन्ते। ते शब्दा भक्तानां कर्णकुहरं नैव प्रविष्टाः। ते मुग्धाः सन्त आनन्दमयं सहास्यमुखं प्रेमानुरञ्जितनयन युगलं प्रियदर्शनं रुचिरदेहकान्तिं सर्वत्यागिनं प्रेमिकं वैरागिनमिममद्भुतं परमहंसयोगेश्वरं पश्यन्तः कियन्तं पन्थानमतीत्य गतमर्णवयानमिति नैवाजानन्। ततश्च ते आनीतानि भर्जिततण्डुल नारिकेलफलानि च स्व स्व वस्त्राञ्चले न्यस्य भोक्तुं प्रवृत्ताः।

अस्मिन्नवसरेऽपि परस्परं गोस्वामि विजयकृष्ण केशव-चन्द्रयोः पूर्वमतान्तरात् कलहवशाच्च नैव संलापः समजनि। एतदभिलक्ष्य भगवान् श्रीरामकृष्णः कथयति—(केशवचन्द्रं प्रति) अये, पश्य अयं विजय आगतः। शिवरामयोर्विरोध इव युवयोः कलहः प्रचरति (हास्यम्)। यथा शिवस्य गुरू रामः।

एकदा केनचित् तौ परस्परं युध्येते स्म। समाप्तयुद्धयोस्तयोरुचितः संलापो बभूव। परन्तु भूतप्रेताः शिवसहचरा वानरा-रामसहचरास्तेतु किचिकिचीत्याकारं रवं कुर्वाणाः परस्परं कलहान्नैव निवृत्ता इति। (उच्चैर्हास्यम्)। एवं भवति प्रायशो जगति। तथापि ते प्रियजनाः। अपि च पुत्रौ लवकुशौ अयुध्यतां-रामेण सह। किञ्च मातृकन्ययोर्मङ्गलवार व्रताचरणयोः फलांशे समेऽपि पृथक् कृत्यं भवति। तथैव तव ब्राह्मसमाजो विद्यते, विजयोऽप्यन्यां समितिमाकाङ्क्षते। अत्र का हानिः स्यात्। (सर्वेषां हास्यम्)।

अन्यच्च स्वयमेवावतीर्णो भगवान् श्रीकृष्णो वृन्दावनादौ लीलां करोति। जटिलाकुटिलाभ्यामलमिति शङ्का चेत् तत्रोत्तरन्तु, ताभ्यां विना लीलापरिपुष्ट्यादिकं न जायते। ताभ्या-मन्तरा कौतुकपरिहसादिकं न भवति। (सर्वेषां हास्यम्)।

किञ्च-रामानुजो विशिष्टाद्वैतवादी आसीत् तस्य गुरुस्तु (गोविन्दाचार्य्यः) अद्वैत वादी बभूव। तयोर्मतान्तरवशात् परस्परं मतान्तरं स्व स्व युक्त्या तौ खण्डितवन्तौ। एवं भवति प्रायशः। भवतु तावत् तथापि तौ प्रियौ। पुनश्च श्रीरामकृष्णः केशव चन्द्रं ब्रूते। कथं त्वया शिष्यलक्षणमविचार्य्य शिष्यतया यः कोऽपि गृह्यते ? तस्मादेव शिष्याः समितिं त्यक्त्वा पला-यन्ते। ततः समाजो नश्यति क्रमेण।

"सर्वे मनुजा आकृत्या समाअपि सत्त्वरजस्तमोगुणवैष-म्यात् तारतम्यभाजो भवन्ति। यथा-सर्वे अपूपा बाह्याकारै स्तुल्या अपि तन्मध्यस्थक्षीर नारिकेल माष सारादि भेदेन भिन्ना भवन्ति।

"जानासि किं मम स्वभावम्? ममैष स्वभावो यत् बाल-कवत् हसन् भक्षयन् तिष्ठंश्च कालं नयामि। अहं हि केवलमम्बां जाने, अन्यत् सर्वं सैव जानाति। यदि कश्चित् वदेत् भवान् कर्त्ता, गुरुः, पिता च—तर्हि कण्टकविद्धमिव मदीयं गात्रं महतीं पीडामनुभवति। तत्त्वतः सच्चिदानन्द एव सर्वेषां गुरुः। "स एष पूर्वेषामपि गुरुः"। स च सर्वान् शिक्षयिष्यति। अहन्तु तस्य पुत्र एव। गुरुपदमभिलषन्तः सन्ति गुरवः सुलभा एव; बहुलक्षमिता जनसमाजेषु। प्रायशः सर्वे जना गुरुपदमधि-कर्त्तुं यतन्ते। के वा शिष्या भवितुमिच्छन्ति? शान्तो दान्तोऽ-तिविरक्तः सुशुद्धो गुरुभक्तस्तपोनिष्ठश्च शिष्यः सर्वथा विरल एव। अतः सर्वदैव परीक्षा शिष्यस्य विधेया।

"अपिच दिव्यज्ञानदाता सर्वथा दुर्लभ एव, दुरधिगमञ्च-तस्य दर्शनम्। स एव महापुरुषो लोकशिक्षामधिकरोति यस्तत्र परमेश्वरादेशमधिगतवान्। यथा नारद शुकदेवादि महर्षयो, यथा वा शङ्कराचार्य्यादयः ते प्राप्तेश्वरादेशा आसन्। ईश्वरा-

देशमप्राप्य यद्युपदेष्टा भवेत् तर्हि तस्योपदेशं कः श्रोष्यति ? ज्ञानासि त्वं, प्रायशः कलिकातावासिनां सामयिकाधिकचञ्चलमनांसि ? यथा यावत् महानसस्थितदारुषु वह्निः प्रकाशते तावत् कटाहे दुग्धं स्फीतमत्यन्तं तिष्ठति। यत्र तु न तथाग्निर्न तथा स्फीतता पयसः। अन्यच्च—केचिदस्थिरभावाः पिपासवो यत्र कूपखननकामाः सन्तः कूपखनने प्रवृत्तास्तत्र बहुशिलखण्ड वशात् तत्खनन स्थानं विहाय अन्यत्र खनितुमारेभिरे। तत्रापि सिकतोद्गमात् तत् परित्यज्य स्थानान्तरं चखुः। अनेन प्रकारेण धैर्य्य तितीक्षाविरहेण नैव तेषां कार्य्यसिद्धिरभवत्।

"अपिचादिष्टोऽहं भगवता इत्येवं मानसं ज्ञानं नैवादेशज्ञापकम्। परं प्रत्यक्षविषय एव भगवान् यदा साधकं मादिशति तदा स्यादुपदेष्टा साधको लब्धेश्वरादेशः। तदादिष्टस्य साधकस्य भारती मृषा निरर्थिका वा न भवति। तदीयशब्दशक्त्या पर्वतोऽपि एजते। अनुभूतिमन्तरा यस्य यत् व्याख्यानं नैव तत् लोकहिताय भवति। सम्भवति तावत् सामयिकोत्तेजनावशात् केचित् लोकाः श्रोष्यन्ति तदिति। परन्तु यस्य नेश्वरदर्शनं तस्य वाक्यं जनैः श्रुतमपि विस्मृतं स्यात्। उपदेशोचितमनुष्ठानन्तु जनेषु किमपि न स्यात्।

"कामारपुकुर ग्रामे हालदार पुकुराख्यं किमपि सरो वर्त्तते। तत्र पुरीषोत्सर्गकामा लोका आगच्छन्तः प्रतिदिनं तत्तीरे मलं निक्षिपन्तिस्म। ग्रामीणैर्वार्य्यमाणाअपि ते नैव विरेमुः। ततश्च ग्रामीणा राजद्वारि निवेदनं चक्रुः। राज पुरुषो राजाज्ञां पत्रे लिखित्वा एकस्मिन् स्तम्भे स्थापयामास। तदाज्ञापत्रे लिखित-मासीत्: "अत्र मलोत्सर्गं मा कुरु" इति दृष्ट्वैतत् ते निवृत्ताः।

"प्राप्तेश्वरदर्शन एव भवेदाचार्य्यः। अपरस्य तूपदेशो भवत्युपहासाय। स्वयमसिद्धः कथं परान् साधयति। अन्धो नह्यन्धं पन्थानं नेतुं समर्थः। (हास्यम्)। परन्तु हिताय विहितं तत् विपरीतं फलं सूते। ईश्वरदर्शनमनुभवत्यान्तरं येन परेषामपि व्याधि परिज्ञानं परोपदेश सामर्थ्यञ्च समुपयाति तथाविधो महात्मा। ईश्वरादेशविरहे समुपदियादहमुपदिशामी त्यभिमानः। अभिमानमूलमज्ञानम्। कर्त्ताहमिति मतिस्तस्य कृतिः। तदैव स जीवन्मुक्तः; यदा कृतिरीश्वरे; स हि सर्वं करोति नाहं किमपि करोमीति बुद्धिरुदेति। मुहुरहं कर्त्तेति बोधः सकल दुःखशोक निदानम्।

अथ-श्रीरामकृष्णो भाषते। (केशवादीनप्रति)-विश्वस्यहितं विधेयमिति श्रीमतां मतम्। विश्वमिदं कियत्तया वाच्यम्?

"अपिच कोऽसि त्वं जगदुपकारकर्त्तेति मन्यसे ? पश्य-परमेश्वरं महता साधनेन । तदागतशक्त्या विश्वहितं विधातुमर्हसि नान्यथा ।

कश्चित् भक्तः पृच्छति—यावत्कालमात्मा मया नोपलभ्यते, तावत् किं सर्वकर्मत्यागी भवामि ?

श्रीरामकृष्णः—मैवम्; कथं कर्मत्यागी भविष्यसि, ईश्वर-ध्यानपरायणो भव। अनुदिनं हरेर्यशोगुण नामानि कुर्वन् कर्त्तव्यकर्माणि कुरु ।

ब्राह्मसमाजभक्तः—संसार प्रतिपालनं कर्म वैषयिकं कर्म च किं करिष्यामि ?

श्रीरामकृष्णः—संसार यात्रा निर्वाह मात्रं कुर्य्याः। किन्तु कुटुम्ब भरणादिकं कुर्वन्नपि यथावसरं रहसि गत्वा प्रार्थनं विधेहि; हे प्रभो; येनाञ्जसा असंसक्तः सन् नित्यानि कर्माणि कर्त्तुं शक्नोम्यहम्; तथाविधं मां कुरु। हे ईश्वर ! मम विषय-कर्मणामवसानं विधेहीति च भगवति प्रार्थयस्व। यतो नित्यकर्मणोऽन्यत्र कर्मणि आसक्तिश्चेत् ईश्वरध्यानमननं न स्यात्। निष्कामतया प्रवृत्तं कर्म अपि सकामतामेति। फलाकाङ्क्षा-विरहितं दानादिकं क्रमेण यशोमानादिकमुद्भावयति, तीव्र-वैराग्यं यदि साधनं नस्यात्।

"एकदा शम्भुमल्लिक नामा धनी कश्चित् पुरुषो मामवोचत्, हे महात्मन्; आशीर्वादं कुरु यत् मम धनादिकमस्ति ततो येन श्रेयः कर्म चिकित्सागार विद्यालय पथ कूप वापीखननादिकं कर्तुं शक्नोऽयहम्, तद् वाक्यं श्रुत्वा मयोक्तम्; त्वयोक्तानि कर्माणि पुण्यसाधनानीति सत्यम्; परन्तु परिहर्तुमयोग्यं समुपस्थितं कर्म निष्कामतया सम्पाद्यमवश्यम्। कामतो बहुकृत्यं नाहर्तव्यम्। तथाकरणे भवतीश्वर विस्मरणम्।

"यथा-कालीघाटनामकर्तीर्थे गत्वा यदि केवलं दरिद्रेभ्यो दानं समारभेथाः; तर्हि कालीदर्शनं न घटेत। (हास्यम्)। यं कमप्युपायं हस्ताहस्ति वा स्वीकृत्याग्रे सर्वश्रेयस्करीं कालीं पश्य; दर्शनान्तरं यथेच्छसि तथैव दानादिकमारभस्व। नोचेत् नैव। यत ईश्वर प्राप्तिनिमित्तं कर्म। पुनराह स देवः-यदि भगवान् प्रत्यक्षविषयो भवेत् तर्हि किं प्रार्थयेथा देहि चिकित्सागारमौषधालयञ्च। (हास्यम्) भक्तस्तु न तानि प्रार्थयते; अपितु एवं याचते; हे प्रभो! शुद्धां भक्तिं सायुज्यमन्ते तव पादपद्मे स्थानञ्च मह्यं देहि।

"किञ्च-गहनः कर्मयोगः शास्त्रेण यथोक्तं कर्मानुष्ठातुं तथानुष्ठानं कलियुगे नैव सुगमम्। कलियुगे तु मानवा अन्नगत-

प्राणा देहात्मसंपन्नाः। ते शास्त्ररीत्या शास्त्रोक्तिपालनेचा-समर्था भवन्ति । यथा-प्रबलज्वराक्रान्तरोगिणं ज्वरहीनं विधातुमिच्छुको यदि पूर्वरीत्या वैद्यश्चिकित्सां सर्वत्रावलम्बेत; तर्हि तेन तस्य व्याधिपरिपीडितस्य झटिति कुतः शान्तिः ? कुत-आरोग्यम् ? प्राचीनरीत्या औषधसेवनेनतु दीर्घकालेनारोग्यं भवति; इदानीन्तन डक्टर गुप्तनिर्मितागद सेवनेन झटिति ज्वरोपशमो भवति। तथैवेह कलियुगे भक्तियोग एव श्रेयसे भवति । हरेर्यशोगुणकीर्त्तनं प्रार्थनचिन्तनानि करणीयानि।

(ब्राह्म भक्तादीन् प्रति) युष्माभिर्यान्यनुष्ठितानि मातृ हरिगुण नामानि तानि भक्तियोगोपायभूतानि। अनुष्ठानै रतै यूयं तावत् धन्याः सार्थकजन्मानः। वेदान्तवादीव जगत् मिथ्या-स्वप्नवत् इत्यादिकमकथयन्तो यूयं भक्ताश्च । युष्माभिः सगुणेश्वरः स्वीक्रीयते । एतदपि शोभनं नाम। तीव्र विरह चेतसा तद्भाव-भावितमनसा वा जना यदि प्रार्थयेरन्; तर्हि ईश्वरमवश्यमेव लब्धुं शक्नुवन्ति। नात्र कश्चन विमर्शः।

अथ—कयलाघाटनामतीरमापन्नोऽर्णव पोतः। ब्राह्म समाज-भक्तादयस्ततोऽवतीर्य्य योगिनं परमहंसदेवं स्मारं स्मारं यथा-स्थानं प्रस्थिता आसन्। महायोगेश्वर श्रीरामकृष्णस्तु भक्तवर्गैः परिवेष्टितः सन् भक्त सुरेन्द्र भवने नरेन्द्र प्रभृति भक्तादिना-

सह संलाप्य पूर्वोक्त केशव विजययोर्मिलनमुक्त्वा सार्द्धदश-घटिकायां रात्रौ अश्व शकटेन जगाम दक्षिणेश्वरम् । (१)

---

(१) श्रीश्रीरामकृष्णकथामृतस्य प्रथमभागस्य द्वितीय-खण्डस्यायमनुवादः ।



# चतुर्थकथा

फलाहारिणी कालिका पूजादिवसे दक्षिणेश्वरे भक्तपरिवृतः श्रीरामकृष्णः।

भगवान् श्रीरामकृष्णो मणिलाल-त्रैलोक्य विश्वास-रामचट्टोपाध्याय-बलराम-नरेन्द्र-राखाल प्रभृतिभिर्भक्तैः परिवृतो दक्षिणेश्वर कालीमन्दिर सन्निहिते गृहे तिष्ठत्यासनस्थः।

त्र्यशीत्याधिकाष्टादश खीष्टाब्दीये (१८८३) जूनमासे चतुर्थ दिवसे ज्यैष्ठे मासि कृष्णचतुर्दश्यां तिथौ फलहारिणी-कालिका-पूजादिवसे सोमवारे सावित्रीचतुर्दश्यां तिथौच श्रीरामकृष्णदर्शनार्थमागच्छन्ति भक्ताः। अध्यापकस्तु पूर्वतन-भट्टारकवारमारभ्यात्र निवसति। व्यतीतरात्रौ कात्यायन्यर्च्चनमासीत्। हरिप्रेमाविष्टः श्रीरामकृष्णस्तु नाट्यमन्दिरे कालिकायाः पुरतो दण्डायमानस्तुष्टाव। हे मातः,—

"व्रजे कात्यायनी त्वं हि स्वर्गः पातालमेव च
धरा त्वं विष्णुरूपा त्वं महाविद्यास्त्वमेव च।

अवतारा दश त्वं हि सर्वस्वं त्वं हि भूतले
नान्यागतिर्जगन्मातस्त्रातुमर्हसि बन्धनात् ।

प्रेमाब्धौ मग्नः श्रीरामकृष्णो गीतं गायं गायं मातरं कथयित्वा स्वगृहमागत्य खट्वायामुपविष्टः। अस्यां रात्रौ मध्यभागे मातृनाम कीर्तनमभूत्। सोमवारे प्रभाते बलरामोऽन्ये केचित् भक्ताश्चाजग्मुः। फलहारिणीपूजाहेतोस्त्रैलोक्यप्रभृतयः (काली-मन्दिरस्य कर्त्तारः) कलत्र पुत्रादिना समागता उद्यानम्। नवघटिका जाता दिवसस्य। स्मिताननः श्रीरामकृष्णो; गङ्गापुरतः पश्चिम दिग्भागे वर्त्तुलाकारालिन्दे उपविष्टः। तत् सान्निध्ये अध्यापकः समुपस्थितः। क्रीडाव्याजेन श्रीरामकृष्ण राखालस्य भक्तस्य मस्तकमादाय स्वाङ्के स्थापितवान्। तत् क्रोडे राखालस्य सुष्ठु शयनमासीत्। कियन्तं दिवसं राखालं गोपाल-भावेन पश्यति परमहंस देवः। अनुचर धृतच्छत्रस्त्रैलोक्यस्तु कालिकां मातरं द्रष्टुं मन्दिरं गच्छति। तं दृष्ट्वा वदति श्रीरामकृष्णः क्रोडस्थं राखालं अये, उत्तिष्ठ इति। उपविष्टं श्रीरामकृष्णं त्रैलोक्यो ननाम।

श्रीरामकृष्णः—(त्रैलोक्यम्) ह्यः कथमभिनयो नाभूत् ?

त्रैलोक्यः—नास्त्यभिनयसाधनं यत्नतो न प्राप्तमिति।

श्रीरामकृष्णः—वारान्तरे मैवं विधेयम्। यथानियमं वर्त्तितव्यम्।

त्रैलोक्यस्तु यथोचितमुक्त्वा गतवान्। कियत् क्षणानन्तरं विष्णुमन्दिरपूजकः श्रीयुक्तरामचट्टोपाध्याय आगतः। तं सम्बोध्य प्राह देवः, हे राम, उक्तस्त्रैलोक्यो मया, यत् अस्मिन् वारे यथा अभिनयो नाभवत्-तथा येन पुनर्न स्यात्। किमदं समीचीनमुक्तं मया?

रामचट्टोपाध्यायः—महात्मन्, भवता समीचीनमुक्तं—यथाविधि वंशपरम्परया विद्यते यत् तस्य तथाकरणं शोभनम्।

श्रीरामकृष्णः—(बलरामं प्रति) अये, अद्यात्रभुङ्क्ष्व भोजनात् किञ्चित् पूर्वं श्रीरामकृष्णः स्वामवस्थां राखाल बलराम-रामलाल-अध्यापकान् समुपस्थितान् भक्तान् कथयति।

श्रीरामकृष्णः—हाजरा मां शास्ति, कथं तव तरुणेषु एतावत् चिन्तनं भवति? तच्छ्रुत्वा यानेन बलरामगृहं गच्छतःपथि मम महती चिन्ता जाता। तत उक्तं हे जगदम्बे, हाजरातु वदति मां किमर्थं नरेन्द्रप्रभृतीन् तरुणान् चिन्तयसि? कथं वा ईश्वरध्यानं विहाय चिन्तनं ते? इत्येवं निवेदयन्तं मां सैव परा देवता मनुष्यरूपेण विराजते, शुद्धान्तःकरणे च सा प्रतिभाति स्फुटमिति बोधयामास विश्वजननी। तथाभूतरूपं पश्यतो मम यदा समाधिर्विलुप्तः, तदा तद्वाक्य-

(१) हाजराख्यः कश्चित् ब्राह्मणः काली मन्दिरे श्रीरामकृष्णं निकषा निवसतिस्म।

स्मरणात् जातक्रोधस्तमाह, रे मन्दबुद्धे, त्वत्तो मे मनो विषाद-माप। पुनरप्यचिन्तयमहो, अयं स कथमिदं निगूढ़तत्त्वं वेत्स्यति ? न हि तस्य कश्चन अपराधः।

श्रीरामकृष्णः—इमे भक्ताः साक्षात् नारायणरूपा इत्यहं जाने, यदा प्रथमं दृष्टो नरेन्द्रो मया तदा स देहात्मबुद्धि विरहित इति मे मतिरासीत्। तद्वाक्षसि हस्तस्पर्शमात्रेण तस्य वाह्यसंज्ञा लुप्ता चेतनामापन्नः स उक्तवान्, "अहो, मां त्वं किमकरोः, पतरौ मम वर्त्तेते"। यदुमल्लिकनाम्नः पुरुषस्य गृहे तथैवावस्था जाता। ततस्तद्दर्शनाय शनैः शनै व्याकुलता मे वृद्धिमापन्ना। प्राणा मे अस्थिरा अभवन्। तेन भोलानाथाख्यं कालीमन्दिरस्थं कर्मचारिणमपृच्छम्, अहो, कायस्थ कुलोद्भव-नरेन्द्राय तरुणाय कथं मे मन उद्विग्नम् ? भोलानाथ उवाच, "अस्यार्थो महाभारते वर्त्तते। लब्धसमाधेः पुरुषस्य मनो यदा निम्नभूमिमाप्नोति तदा सत्त्वगुणोद्भवैः पुरुषैः सह विलसति। दैवीं सम्पदमापन्नं लोकं दृष्ट्वा तस्य मनो मुदमुपैति।" एतच्छ्रुत्वा मे मनः शमं लेभे। अन्तरान्तरा तं द्रष्टुमरोदम्।

श्रीरामकृष्णः—( विस्मितः सन् ) अहो, मे पूर्वं कावस्था जाता ? यदा प्रथमं तां दशामापन्न आसम्, तदा अहर्निश-मिति ज्ञानं मे नासीत् कदा वा दिवाकरोऽस्तमेति कदा वा रात्रिरागच्छतीति मे न बोधः। सर्वे नरा ऊचुः-बभूव उन्मत्तो-

ऽयम् ततो बान्धवैः सम्पादितो मे विवाहः। उन्माद दशायां चिन्ता जाता—पत्नी मे तथाभूताचरन्ती सती भोजनपाना-दिना वर्त्तिष्यते। जगाम श्वशुरालयं, तत्रापि संकीर्त्तन-मभूत्। वारमेकैकशोऽचिन्तयम्-किं मे भविष्यति ? पुनश्चावदम् हे विश्वजननि ! स्वदेशीयो भूपालो यद्याद्रियेत मां तदा मे विश्वासो ज़ायेत इदं सत्यमिति। तेऽपि स्वेच्छयागत्य मया संवादं चक्रुः।

अहो ! अद्भुतावस्था शता ! मनाक् क्वचिद् वस्तुनिरीक्ष-णेन मुहुर्मुहुर्भाव उदेति। साक्षादीश्वरीदृष्ट्या चतुर्दशवर्षी या-सुन्दरी अर्चिता मया रजतमुद्रानिवेदनेन च तां प्राणमम्। रामलीलाभिनयं द्रष्टुमगाम्। तत्र ये अभिनयकारिणस्तान् साक्षात् सीतारामलक्ष्मणविभीषणान् विभाव्य अपूजयम्। कुमारीं चापूजयम्, तदानीं सा साक्षाद्देवी जगदम्बेत्युपलब्धं मया।

"एकदा दक्षिणेश्वरे बकुल विटपिमूले नीलवस्त्रं परिदधाना काचित् रमणी दण्डायमानासीत्। तां दृष्ट्वा सीतादेवी एव सा इति मे सहसैव मतिरुदियाय। तदा दण्डायमानां बालां विस्मृत्य लङ्काया उद्धृता सीता रामं निकषा यातीत्युपलब्धं मया। दीर्घक्षणं विलुप्तबाह्यसंज्ञः समाधि मग्न आसम्।

"अन्यच्च एकदा (कलिकता नगर्य्याम्) गडेरमाठ इत्याख्ये प्रान्तरे व्योमयानं द्रष्टुमगाम्। तत्र जनतासीत्। तत्राकस्मात्

दृष्टिपथमुपेतं कमपि इंराजपुत्रं त्रिभङ्गाकारेण वृक्षे संलग्नाङ्गमवलोक्य सहसैव श्रीकृष्ण एवायमित्यनुभवतो मे समाधिर्बभूव।

"किञ्च शिओडाख्ये स्थाने गोपालबालकानभोजयम् तेषां हस्तेषु मिष्टान्नादिकं दत्त्वा तदुच्छिष्टानि मिष्टान्नानि अभुञ्जम्। इमे साक्षात् ब्रजगोपाला एवेत्यपश्यम्।

"मम तु तदानीं प्रायेण बाह्यसंज्ञा विलुप्तासीत् बाबुमथुरस्तु तद्गृहं जानबाजारख्यस्थानस्थं मां निनाय। तत्र कतिपयदिवसान् न्यवसम्। साक्षादेव जगदम्बाया दास्यहमिति मे मतिरासीत्। यथा बालकात् बालिकाया वा न त्रपन्ते केचित्, तथा तद्गृहान्तः पुरचारिणीनां रमणीनां मां पश्यन्तीनां त्रपा न बभूव।

"अद्यापि मम यत्किञ्चिदासाद्य भाव उदेति। जपं कुर्वतो राखालस्यौष्ठं कम्पमानं निरीक्ष्य गाढानुरागेण सहसैवेश्वर भावस्फुरणेन विह्वलोऽभवम्।

श्रीरामकृष्णस्तु पुनरपि प्रकृतिभावमाश्रित्य कथयति एकदा कामपि प्रसिद्धां देवकीर्तनकारिणीं नटीं तदीयाभिनयस्यानुकरणमदर्शयम्। सा तु तथाविधं मदीयचेष्टितं युक्तमित्यनुमेने। कथमिदमवगतं सर्वं भवतेति विस्मयमप्याप। इदमुक्त्वा तत्क्षणं नटीकीर्तनं यथोचितं विदधे स देवः। तदवलोक्य तत्रत्या भक्ताः सविस्मयं मुच्चैर्जहसुः।

श्रीरामकृष्णः भोजनान्ते विश्रामेच्छया शेते तस्य नैव गाढसुषुप्तिः। परन्तु तन्द्रैवासीत्। श्रीमन्मणिलाल माल्लकस्तु (पुरातनब्राह्मसम्प्रदायवर्त्ती) आगत्य तं प्रणम्यासनमाश्रितः। तदानीमपि शेते श्रीरामकृष्णः। मणिलालोऽन्तरान्तरा पृच्छति। परमहंसदेवो निद्राजागरणयोरन्तरा तिष्ठन् तमुत्तरेण प्रीणयति।

मणिलालः शिवनाथो नित्यगोपालस्योत्तमावस्थेति प्रशंसति। निद्रालेशवशश्च परमहंसदेवः शायं शायं पृच्छति, अये! हाजराख्यं पुरुषं ते किमिति वर्णयन्ति ? उन्निद्रः समासीनः परमहंसदेवस्तस्य भवनाथस्य भावं भक्तिमधिकां निरूपयति।

श्रीरामकृष्णः—अहो, तस्य किमु तद्गत भावः ? कीर्त्तनारम्भतस्तस्य नेत्राभ्यां प्रेमाश्रुणः सम्भारो विगलति। स च भवनाथः हरीशं दृष्ट्वैव तन्मयतां गतः। वदति च हरीशो गृहं परित्यज्य अन्तरान्तरा वसत्यत्र तस्मात् सर्वथा सुखीति।

अये, किमु भक्ति कारणम् ? भवनाथादीनां यूनां कुतो भावोन्मेष इति चाध्यापकं पृच्छति परमहंसदेवः। अध्यापकस्तुष्णीमास्ते।

श्रीरामकृष्णः—प्रत्यक्षत आकारस्याविशेषेऽपि मनुष्याणां परमेश्वराजिज्ञासुरेक सदधिक स्तावदीश्वर जिज्ञासा सहित

प्रेमभक्ति समृद्धोऽपरस्तयोः प्रथमस्तु माषगर्भपूप विशेष इवा-थ द्वितीयः खलु क्षीरसार गर्भपूपविशेषसमः। बहिः प्रत्यक्षस्य विशेषाभावेऽपि विशेषस्तयोः स्पष्टएव।

साम्प्रतं श्रीरामकृष्णो भक्तेभ्योऽभयं ददाति।

श्रीरामकृष्णः—(अध्यापकम्) कश्चित् भीतो मन्यते नूनः बद्धोऽहं, ज्ञानभक्ती मे न भविष्यतः। परन्तु तस्यापरस्य च गुरुकृपाप्राप्तितो नश्यति भयम्। कस्याञ्चित् छागश्रेण्यां काचित् व्याघ्री प्रादुर्भूता। तस्या उत्प्लवेन तद्गर्भस्थः शावको निश्चक्राम। तेन व्याघ्री मृता। तच्छावकस्तु तत्र उवास। स च शनैः शनै र्वृद्धिमापन्नोऽजादिवत् तृणादिकं भुञ्जानः छागकण्ठ-ध्वनिं कुर्वन्नास्त। एकदा तच्छागश्रेण्यां व्याघ्र एकः प्रविष्टः। स तस्यां श्रेण्यां दूर्वादिकं खादन्तं व्याघ्रशावकं दृष्ट्वा विस्मयं लेभे। तेन च धावता स गृहीतः। बलेन धृतो व्याघ्रशिशुः छाग-कण्ठध्वनिं कृत्वा ननाद। तथाभूताचरणेऽपि स व्याघ्रःबलेन जवेन वा तमाकृष्य परिगृह्य च जलं निकषा निनाय। तत् स्थाने तं निधाय उवाच, हे तृणखादक व्याघ्र, मत्तुल्यं पश्य ज़ले ते मुखम्। अपिच मांसमिदं खाद इत्युक्त्वा मांसभक्षणेऽनिच्छ-तोऽपि तस्य बलेन मुखे किञ्चित् मांसं निधाय खादयामास व्याघ्रः। प्रथमं स भ्रमेणानिच्छन्नपि रक्तास्वादमुपलभ्य मांसं चखाद। नवागत व्याघ्रस्तमुवाच साम्प्रतं त्वमवगच्छसि नवा?

यथा इं तथा त्वमति ? अतस्त्वमागच्छ मया यथेच्छं वन-विहाराय ।

"एवञ्च समुदितायां गुरुकृपायां नश्यति भयम् सर्वं परं गुरुरसौ कस्त्वं किमु च स्वरूपन्ते इति प्रबोधयति। यस्याति-स्तोकमस्ति साधनाराधना लक्षणं तस्मै प्रबोधयति कृपया गुरुरिदमिदमिति विशेषेण, तदा स साधकः स्वयमवगच्छति किं सत् किञ्चासत्—ईश्वर एव सत्यः पुनरनित्यः संसार इति।

"कश्चित् धीवरो रात्रौ कस्मिंश्चिदुद्यानगते जलाशये जालं वितत्य मीनानपहरति स्म। गृहस्थस्तदवगम्य भृत्यादिवर्गैरुद्यानं समन्ततोऽवरुरोध ते च प्रदीपादिकं गृहीत्वा मीनापहारिणं धीवरं मृगयामासुः। परन्तु धीवरस्तज्ज्ञात्वा जालं विहाय अङ्गेषु भस्मानि मर्द्दयन् कस्मिंश्चित् विटपिमूले सन्यासिवत् छद्माकारेण तस्थौ। ते च महता परिश्रमेण सर्वतोऽन्विष्य वृक्षमूले ध्यानमग्नं भस्मविलिप्ताङ्गं साधुवेशं तं ददृशुः। परेद्युर्ग्रामवासिनस्तदुद्याने तं महान्तं कञ्चित् साधुमवगम्य फलमिष्टान्नादिकं गृहीत्वा समभ्यर्च्च्य नेमुः। किञ्च बहुरजत-ताम्रमुद्रादिकमपि साधोः पुरत उपस्थापयामासुः। एतदवलोक्य कैवर्त्तो विस्मयं लेभे। अहो! किमेतत् चित्रम्! न ह्यहं साधुस्तथापि छद्मवेशिनं मां प्रति नराणामेतावाननुरागः! यद्यहं

तत्त्वतः साधुर्भवेयम्, मम भगवल्लाभः स्यादवश्यमेवेत्यत्र नास्ति संशयलेशः। साधनव्याजेनैव यद्येतावान् विवेको जातः. कैव कथा सत्यसाधनस्य। तेनेश्वर एव सत्योऽनित्योऽयं संसार इति उदेष्यति मतिर्मोक्षदा।

कश्चित् भक्तो मनसा चिन्तयति, संसारोऽनित्यइति मत्वा धीवरस्तं तत्याज। ये तु संसारे वर्त्तन्ते तेषां का गतिः स्यात्? तेषां किं संसारत्यागोऽपेक्षणीयो वा? तदा अहेतुकदयार्णवः श्रीरामकृष्णः सपदि वदति, कश्चित् शास्ता यदि (रोषवशात्) कर्मचारिणं कारागारे निक्षिपेत् तत्र स च कारागारबन्धन-जनितं दुःखमनुभवति। प्रत्युत यदा स कारागारात् मुक्तिं लभते, तदा स मुक्तः सन् किं राजमार्गे ताण्डवं कुर्वन् नृत्यति? परन्तु पूर्ववत् वर्त्तनं यथा लभेत तथा चेष्टते। गुरु-प्रसाद लब्धबोधो जीवन्मुक्तः सन् संसारे स्थातुर्मर्हति। एत-दुक्त्वा परमहंस देवः संसारिभ्योऽभयं ददौ।

मणिलालः—(श्रीरामकृष्णं प्रति) उपासनाकाले कुत्र कथ वेश्वरं ध्यायेय?

श्रीरामकृष्णः—हृदयमेव प्रसिद्धस्थानम्, तत्र ध्यानं कुर्य्याः।

मणिलालस्तु ब्राह्ममतानुवर्त्ती निराकारवादी। तमभिलक्ष्य भाषते परहंसदेवः। तत्त्वज्ञस्य कबीरस्य महती कथा तु—माता मे

सगुणेश्वर:; पिता मे ब्रह्म निर्गुणम्। क एव वन्द्य: क एव निन्द्यश्च तुलादण्ड पात्रद्वयस्थितयोरेतयो: साम्यादिति।

"हलधारी त्वहनि सगुणेश्वरं रात्रौ निर्गुणं ब्रह्म ध्यायतेस्म। सगुणे निर्गुणे वा श्रद्धा यथोचितावश्यकी। सा तु विद्येत चेत् सगुणनिर्गुणयो र्नास्ति विशेष:।

शम्भुमल्लिकनामा कश्चित् वागबाजारख्यस्थानात् पद् यां स्वोद्यानमाजगाम। अन्य:कश्चित् तमुवाच अहो! एतावन्तं दीर्घपथं यानेन विना व्रजसि तेन ते सम्भवति च विपत्। श्रुत्वैतत् आरक्तवदन: शम्भुर्जगाद, भो, ईश्वरनाम-कुर्वन् निर्गतोऽहं गृहात्, का मे विपत्ति:स्यात्? विश्वासा-विश्वास वलेन सर्वं घटते। पूर्वं भावोन्मत्ततादशायां मनसा-चिन्तयममुं यदि पश्येयमसौ धनाध्यक्षो यदि मयालपेत् तर्हि मे कल्पना सत्या स्यात्? तद्दशायां या या वाञ्छा मेऽभवत् सैव सफला बभूव।

प्रात:कालीन स्वप्नजातं भवति वास्तवमिति मति: कुसंस्का-रात् जायते इत्यत: पृच्छति अध्यापक:। मानसी घटना वास्तवी भवति किमु?

श्रीरामकृष्ण:—न, तदानीं संकल्पजातं मेऽभवत् प्रत्यक्षम्। तदानीमीश्वरनाम कुर्वतो यथा यथा मे विश्वासस्तथा तथाऽ-

भवत्। (मणिलालं प्रति) सरलतोदारते विना विश्वासो नैव ज़ायते इति जानीहि।

"कोटरनेत्रता-पक्वास्थिता नेत्रवक्रतेत्यादिकं कुलक्षण-मङ्गानां येषां विद्यते तेषु विश्वासोऽसा नैव जायते।"

सन्ध्यागता, परिचारिकया गृहं सधूपं विदधे। मणिलाल-प्रभृतिषु गतेषु भक्तानामेकं द्वयं वा साम्प्रतं वर्त्तते। नीरवे धूपिते गृहे श्रीरामकृष्णः खट्वायामुपविश्य विश्वजननीं चिन्तयति। तदा रामलालोऽध्यापकस्तु भूमिमधिवसतः।

कियत्क्षणानन्तरं भगवतीनाम्नी दासी आगत्य दूरात् परमहंसदेवं ननाम। स देवस्तामुपवेशनार्थमादिदेश। भगवती तु प्राचीना दासी बहून् वत्सरान् यावत् बाबु मथुरानाथ-गृहे निवसति। तेन दीर्घकालं सा परिचिता। प्रथमे वयसि तस्या स्वभावः कलुषित आसीत्। दयार्णवः पतितपावनः श्रीरामकृष्णस्तदीयं प्राचीनवृत्तमालोचयितुमारेभे।

श्रीरामकृष्णः—साम्प्रतं त्वमत्यधिकवयस्काऽसि, यत्त्वया धनादिकमर्जितं तेन साधुवैष्णवादिकं सेवितं नवा?

भगवती—(स्मितं कुर्वन्ती) कथं वा तद्वदेयम्?

श्रीरामकृष्णः—किमु काशीवृन्दावनादिदर्शनं तेऽभूत्?

भगवती—(ससङ्कोचमाह) कथं वा तद् वदेयम्? मया

जलावतरण सोपानश्रेणिरेका निर्म्मिता, तत्र प्रस्तरे मम नामाङ्कितमस्ति।

श्रीरामकृष्णः—(सहर्षम्) अये किमुच्यते ?

भगवती—एवम्, तत्र श्रीमती भगवती दासीति नामाङ्कितमस्ति।

श्रीरामकृष्णः—(स्मितं कुर्वन्) तत्तु भद्रमेव। भगवती तु जातनिर्भया श्रीरामकृष्णपदद्वयं स्पृशन्ती ननाम। स्पर्शमात्रेण यथा वृश्चिकदंशनेन मनुष्याः सचकिता जातोद्वेगा भवन्ति दण्डायमानास्तथा श्रीरामकृष्णोऽस्थिरः सन् गोविन्द गोविन्देति नामोच्चारयन् उत्तस्थौ। अपिच दीर्घं विश्वसन् स्वगृहैकदेशतो जाह्नवीतोयमानीय भगवती स्पृष्टं पाददेशं प्रक्षालितवान्। ये तु भक्ताः समुपस्थितास्ते सविस्मयाः सन्त इदमाकस्मिकं व्यापारजातमेकाग्रदृष्ट्याऽवलोकयन्ति। दासी तु हतमाना जीवन्मृतेवोपविष्टा। तामवलोक्य दयार्णवः पतितपावनः श्रीरामकृष्णो दासीं सम्बोध्य करुणया गिरा कथयति तदीयहृत्तापमपनेतुम्। अयि-भगवति, शृणु मे सङ्गीतम्—

मानसभ्रमरो मग्नः श्यामायाः श्रीपदाम्बुजे
कृष्णत्वमुभयोस्तुल्यमतश्चान्योऽन्य मिश्रणम्।
पञ्चतत्त्वं तदालोकभयाद्दूरं पलायते,
कमलाकान्त एतत्तु वीक्ष्य मग्नः सुखाम्बुधौ।

इत्यादिकम् (१)

---

(१) श्रीश्रीरामकृष्ण कथामृते द्वितीयभागे षष्ठखण्डस्यायमनुवादः।

# पञ्चमकथा

दक्षिणेश्वरे भक्तपरिवृतः श्रीरामकृष्णः

त्र्यशीत्यष्टादशशत खीष्टाब्दीये जूनमासि पञ्चमदिवसे (इं १८-८३, ५ जून) अमावास्यायां तिथौ कालीमन्दिर सन्निहित गृहे श्रीरामकृष्ण उपविष्टः। भट्टारकवारे भक्तानां समागमो ह्यधिको भवति, नतु वारान्तरे। राखालस्तु श्रीरामकृष्णं निकषा निवसति। परमहंसदेवस्य गृहस्य सम्मुखालिन्दे हाजरा-नामा भक्त आसने उपविष्टः। सोमवारे रात्रौ कालीनाट्य-मन्दिरे श्रीकृष्णाभिनयो बभूव।

मध्याह्ने भोजनानन्तरं श्रीरामकृष्णः स्वस्य प्रेमोन्मादा-वस्थामध्यापकं ज्ञापयति।

श्रीरामकृष्णः—(अध्यापकं प्रति) अहो चित्रं कावस्था गता पूर्वम्! नह्यत्र कालीमन्दिरे भोजनं विहितं मया। वराह-नगरं एँडेदये नामग्रामं दक्षिणेश्वरग्रामञ्चागच्छम्। भोजनार्थी सन् यथाकालं किमपि ब्राह्मण गृहं गत्वा तत्र नैव-

किमपि वाक्यमवदम्। गृहस्था यदि पृच्छेयुर्मां किमर्थमिहागतोसीति ? केवलं अन्नमिच्छामीति वक्तुं निरचिनवम्।

"एकदा मयोक्तं, हे बाबु मथुर, ईश्वरनामकीर्तनानुरागिणं ठक्कुरदेवेन्द्रं द्रष्टुमिच्छामि, त्वं नेष्यसि मां तद्गृहम् ? स चाभिमानवशादामन्त्रणं विना न याति कस्यापि गृहम्। अतोऽनिच्छया उवाच, "एवं पूर्वं विद्यालये देवेन्द्रेण सहाहमपठम्। सच मम सहाध्यायी। तात, त्वां तद्गृहं नेष्यामि।"

अन्यच्च एकदा बागबाजारसन्निहितसेतुं निकषा दीनमुखोपाध्यायनामा कश्चित् भक्त ईश्वरपरायणो निवसतीति श्रुत्वा मयोक्तं बाबु मथुर, तं द्रष्टुमिच्छामि। स च तथैवानिच्छन्नपि अश्वशकटेन नीतवान् मां, क्षुद्रतमं तद्गृहम्, महायानागतं श्रेष्ठधनिनं दृष्ट्वा स लज्जितो बभूव। अस्माकमपि तथैव व्रीडा जाता। अपि च तद्दिने मुखोपाध्यायदीनस्य पुत्रस्य उपनयनमासीत्। कुत्र वा प्रवेशयिष्यत्यस्मान् ? वयन्तु पार्श्वगृहमुपवेशनार्थं गताः, तद्दृष्ट्वा कश्चित् निवारयन् जगाद, भो भो, मा गच्छत तद्गृहम्, स्त्रियस्तु तत्रोपविष्टाः। ततश्च पुनरप्यस्माकं संजाता त्रपा। बाबुमथुरस्त्वागमनकाले बभाषे मां तात, पुनश्च त्वदनुज्ञां न स्वीकुर्य्यामिति। तत् श्रुत्वाहसम्।

"कियत्यद्भुता दशा जाता कुमारसिंनामा कश्चित् भोजनार्थमर्च्चनार्थञ्चा साधून् मामपि निमन्त्रयामास। तत्र गत्वा बहव: साधवो दृष्टा मया। तत्रोपवेशनानन्तरं तेषां कश्चित् साधु: मम परिचयं पप्रच्छ। तेन पृष्ट:सन् किं बहुना परिचयेनेति विभाव्य ततोऽपसृत्यान्यत्रोपविष्ट आसम्। पात्रासनादिना साधूनां भोजनविधौ सम्पूर्णे सति तेषां भोजनारम्भमनपेक्ष्य स्वयं भोक्तुं प्रवृत्त आसम्। तथा दृष्ट्वा कश्चित् साधुरुक्तवान्—"अहो, कोऽसौ" ! तदीयं वचो दूरत एव श्रुतं मया।

मध्याह्नवेला, पञ्चमघटिका जाता। परमहंस देवस्तु गृहालिन्दसोपानोपर्य्युपविष्ट:। तत्र राखाल-हाजरा-अध्यापकाश्च समुपस्थिता:। हाजराख्यस्य सोऽहंभावं मनसि निधाय तमाह—

श्रीरामकृष्ण:—सर्वं द्वन्द्वजातं निवृत्तं भवति यदि स एव परमात्मा आस्तिकनास्तिकोत्तमाधमानित्यानित्यजगत्-सुखदु:खादिरूपेण सर्वातीतरूपेण च वर्त्तते इति प्रत्यक्षविषयो भवति।

कस्यचित् कृषकस्य वृद्धावस्थायामेक: पुत्रो बभूव। सच तं पुत्रं सादरमपालयत्। सादरपरिपालनेन शनै: शनैर्बालको वृद्धिमाप। एकदा स कृषक: भूमिकर्षणकाले वार्त्तावहेन विज्ञापितो यत्, तव पुत्रो व्याधिमापन्नस्तेनचोपतापेन दशान्तिमा

संजाता। अथ त्वेतत् स क्षेत्राजीवः गृहमागत्य पुत्रं मृतं दृष्टवान्। दुःखसंविग्ना स्त्री तु भृशं रोदिति। परन्त्वेतदवलोकयतोऽपि कृषकस्य न नेत्राश्रु जातं विगलति। कलत्रन्तु स्वदुःखं ख्यापयत् प्रतिवासिनमवोचत्। पश्य तावत्, प्रेष्ठाय संपरेताय पुत्राय अस्य (कृषकस्य) पत्युः कियदपि नयनवारि नैव न्यपतत्। ततो बहुक्षणानन्तरं कृषकः स्त्रियमुवाच, पुत्राय तस्मै कुतो न अरुदं शृणु, ह्यः स्वप्नेऽहं राजासम् तदा मे सप्त पुत्रा जाताः। ते च शनैः रूपयौवनसंपन्ना अध्ययनशीला धर्मपरायणा बभूवुः। तद्दर्शनकाले मम निद्रापगता। ब्रू हि, किं तवैकस्मै पुत्राय रोदिमि उत मम सप्त पुत्रेभ्यः? ततश्चारोदनं मे ज्ञानिनां मते यथा स्वप्नावस्था न वास्तवी किन्तु प्रातिभासिकी तथैव जाग्रदवस्थापि।

श्रीरामकृष्णः—ईश्वर एव कर्त्ता, तदिच्छया भवति सर्वम्।

हाजरा—परन्तु तत्त्वमिदं दुर्बोधमेव। भूकैलास वासिनं कञ्चित् समध्यापन्नं साधुं बाह्यसंज्ञां प्रापयितुं लोकाः कदा मृत्तिकायां प्रोथितवन्तः, कदाचित् जले निमज्जितवन्तः, कदा वा तद्गात्रे तप्तशलाकामर्पयामासुः। एभिः प्रकारैस्तस्य चेतना बभूव। परन्तु पूर्वोक्त विषमपीडनेन साधुः शरीरं तत्याज। जनैरवपीडितः स ईश्वरेच्छया देहं जहौ।

श्रीरामकृष्ण:—यो यत् कर्म कुरुते स तत् फलं भुङ्क्ते। अपित्वीश्वरेच्छया साधोः शरीरमपेतम्। वैद्यस्तु काचपात्रे मकरध्वजं नाम भेषजं निर्माति। मृत्तिकालिप्तं किमपि पात्र मग्नौ स्थापयति। तत् काच पात्रान्तर्वर्त्ति सुवर्णमग्निना दग्धं द्रव्यान्तरेणैकीभूय मकरध्वजाख्यां लभते। रुग्णे मकरध्वजे चिकित्सको वहिरावरणं काचपात्रमपहाय तत्रत्यं मकरध्वजं परिगृह्णाति। तदानीं तत् काचपात्रेणालम्। तत् पात्रं नश्यतु तिष्ठतु वा। तथैव तस्य साधोर्वस्तु लाभोऽभूदिति सम्भाव्यते। लोका मन्यन्ते साधुः पीडनेन मृत इति। भगवत् साक्षात्कारा नन्तरं देहेनालम्। शरीरं तिष्ठत्वपैतुवा नहि तेन काचित् हानि र्लाभोवा भक्तस्य।

भूकैलास वासी साधुः समाधौ ममज्ज। समाधे र्विभागोऽपि बहुधा वर्त्तते। हृषीकेशादागतेन समाधिमता केनापि साधुना सार्द्धं सारूप्यं गता मम समाधिदशा। समाधौ देहगतो वायुः कदाः पिपीलिकेव, कदा वा मर्कटः शाखातः शाखान्त न्तरमिव केवलं प्लवते, कालान्तरे तु महामीन इव भृशं क्रीडति। समाधिमानेव जनाति तदीयां गतिमुत्तमाम्। यत्र विलीयते विचित्रमिदं विश्वम्। समाधेरपगमे मातरं कामये-मात र्विधेहि हितं मे, रुचिरस्तुकथायामिति च। परसमाधेर-नन्तरमवताराद्दीनामेवावृत्ति र्न तु साधारणजनानां, तेषान्तु

चिराय निवृत्ति र्मुक्तिर्नाम गृहीत मनुजाकृतिरीश्वरो नामावतारो विधृतजीवविमुक्ति कुञ्चिका हस्तो विश्वं विचरन् परसमाधिमापन्नोऽपि पुनरायाति तथैव चेष्टते च जीवानां महते हिताय।

अध्यापकः—(स्वगतम्) श्रीरामकृष्णस्य हस्ते किमु मनुज मुक्ति कुञ्चिका वर्त्तते ?

हाजरा—यस्य जनस्य तु तुष्यतीश्वरस्तस्य पुनरस्तु मास्तु वावतारः ?

श्रीरामकृष्णः—(विहस्य) एवं, एवं, परिचित राज निवासस्य राजपुरुषस्य वासस्थानं राजभृत्य चिन्तया कृतमिति सत्यमेव।

सन्ध्या समागता। मन्दिरादौ भवत्यारात्रिकम्। द्वादशशिवमन्दिरेषु राधाकान्तमन्दिरे भवतारिणीमन्दिरे च सुखावहः शङ्खघण्टानिनादोऽश्रूयत। आरात्रिके समाप्ते श्रीरामकृष्णः स्वगृहादागत्यावसद्दक्षिणालिन्दे। सर्वदिक्षु सान्द्रं तमः प्रतिभाति। स्थानविशेषे मन्दिरादौ प्रदीपा ज्वलन्ति। गङ्गासरसि गगनस्य नीला प्रतिकृतिः प्रतिभाति। भावमग्नस्य श्रीरामकृष्णस्य गाढानुरागेणान्तरान्तरा प्रणवोच्चारणं मातृ नाम कीर्त्तनञ्चास्ति। निदाघतया गृहान्तरुष्मा वर्त्तते। तस्मादलिन्दमागतो देवः। केनापि भक्तेन प्रदत्ते महार्घासने शायं शायं अहर्निशं

कालीपदसरोजध्यानानुकारी श्रीरामकृष्णो मृदु कथयति मणिना (अध्यापकस्यापरनाम) भक्तेन सह।

श्रीरामकृष्णः—अहो ! ईश्वरः प्रत्यक्षविषयो भवति। अमुष्य जनस्य तु तद्दर्शनमभूदिति, यं कमपि मा वद। तत्तथा भवतु। तव किमु सगुणेश्वरे निर्गुणे ब्रह्मणि वा रुचिर्जायते ?

मणिः—(ससम्मानम्) मह्यं निर्गुणं ब्रह्म रोचते परन्तु साम्प्रतं शनैः शनैः एकमेव बहुधा भातीति मतिरेष्यतीति सम्भावयामि।

श्रीरामकृष्णः—त्वमेकदा मतिशीलाख्य जनस्य ह्रदं बेल-घोराख्यस्थानं गतं मां प्रापय। तत्र ह्रदे बहवो मत्स्या वर्त्तन्ते। तत्र भर्जिततण्डुलानि विक्षिप्तानि भोक्तुमागच्छन्ति मीनाः। क्रीड़तो मीनान् दृष्ट्वानन्दो जायेत। अहो चित्रम् ! यथा सच्चिदानन्द सागरे आत्मरूपो मीनः क्रीडति। मत्स्यान् तानवलोक्य तव मति भविष्यति, यत् स्रोतसि मुक्ता मीना इव मुक्तास्ते प्राणाः विजने प्रान्तरे भावमेशं लभन्ते इति युक्तम्।

तल्लाभाय साधना अपेक्षिता। पुरस्तात् कठोरसाधनं विहितं मया। बिल्ववृक्षमूले बहुविधानि साधनानि कृतानि। तत्र विटपिमूले निपतन् रुदन्नहं याचे हे जगदम्बे, आविर्भूय मह्यं दर्शनं देहीति। तदानीं रुदतो मम नेत्राश्रुभि विगलितैः गात्रं प्लावितमभूत्।

मणि:—भवता महता परिश्रमेण बहूनि साधनानि कृतानि। इतरेषां जनानां कथमञ्जसा तत् साक्षात्कारो घटिष्यते ? नह्य-ङ्गुलि परिभ्रमणेन गृहं सर्वथा वृतिवृतं भवेत्।

श्रीरामकृष्णः—(विहस्य) अमृतनामा कश्चित् भक्तोऽ-वदत्। एकोऽपि जनो यद्यग्निं प्रज्वालयेत् दीप्तिमन्तं तं जात-वेदसमन्ये दशजनाः सेवन्ते। किञ्च लीलानुवत्त नः हि तत्व-प्रत्यक्षोत्तरः प्रीतये प्रभवति। अस्त्यन्या काचित् वाणी, नित्यं समनुप्राप्य लीला विलासनमुत्तमम्।

मणि:—भवतोक्तम्, लीला तु विलासायेति।

श्रीरामकृष्ण:—न ह्येवम्। लीलापि सत्या। अन्यच्चात्रा-गमनकाले कियदुपायन पाणिस्त्वमागच्छेः।

"स्वस्यैव कथनं नैव शोभनं, ततोऽभिमानो जायते। अधर-सेनः भक्तमुवाचैतत्, ताम्र मुद्रया किञ्चित् द्रव्यमानयेर्माम्। भवनाथञ्चापि ताम्र मुद्रया क्रीतं ताम्बूलमानयेरिति बभाषे। त्वया किमु परिलक्ष्यते भवनाथस्य किदृशी भक्तिः प्रादुर्भूता। भवनाथ नरेन्द्रौ नारीनराविव। नरेन्द्रस्यानुगो भवनाथ: केन चित् यानेन नरेन्द्रमानय मदन्तिके खाद्यद्रव्यञ्च। तेन कल्याण-मुपचयमेष्यति।

"ज्ञानवतां ज्ञानमार्गः भक्तिमतां भक्तिमार्गश्चेति।" द्वय-मपि पथशब्दवाच्यम्। भक्तिवर्त्मनि बहुलमनुष्ठानादिकमपे-

क्षन्ते। ज्ञानपथे तु अननुष्ठानजनितं कल्मषं ज्ञानाग्निः प्रदहति। यथा प्रदीप्ताग्नौ रम्भावृक्षस्यापि भवति भस्मीभावः। ज्ञानिनां मार्गस्तु तत्त्वनिर्णयकरः कठोर एव। तत्त्वनिर्णयार्थिनोऽपि कदाचित् नास्तिकता उदेति। अनन्यमनसो भक्तस्य तु नास्तिकभावोदयेऽपि कदाचित् न तेन हीयते ईश्वरोपासना। यस्य पितृपितामहादयो भूमिकर्षका आसन्, कुत्रापि वर्षे अनावृष्टितः शस्याद्यनुत्पादेऽपि स नत्यजति क्षेत्रजीविकाम्।"

श्रीरामकृष्णः—उपबर्होपरि शीर्षं निधाय शायं शायं कथयति। अन्तरा मणिमवदत् मम पादे वेदना संजाता पादसेवनं कुरु। सच्च मणिरहैतुकदयार्णवश्रीरामकृष्णस्य पादपद्मं सेवमानः तत् मुखपद्म विनिसृतं वेदध्वनिं शुश्राव। (१)

---

श्रीरामकृष्णकथामृते द्वितीयभागे सप्तमखण्डस्यानुवादः।



# षष्ठ कथा

दक्षिणेश्वरे पण्डित शशधरादिना सह श्रीरामकृष्णः।

चतुरशीत्यधिकाष्टादशशत-ख्रीष्टाब्दीये जून मासि-त्रिंशदिवसे (इः १८८४ ता ३० जून) सोमवारे अपराह्ण चतुर्थघटिकायां स्वगृहे भक्तादि परिवृतो भूमावासने उपविष्टः सन् श्रीरामकृष्णः समागतेन पण्डित शशधरेण सार्द्धं कथयति। पण्डितः शशधरस्तदग्रजः श्रीमन् भूधरचट्टोपाध्यायश्च समागतौ। पण्डित शशधरस्तु भ्रातुर्गृहे ठनठनियानामकस्थाने कलिकातानगर्यां निवसति। षड्दिनेभ्यःपूर्वं श्रीरथयात्रादिवसे कलिकातानगर्यां तद्गृहे तेन सहालापः समजनि। पुनश्चाद्यागतः पण्डितः।

पण्डितशशधरस्तु शास्त्रज्ञो ज्ञानयोगावलम्बी च। तेन श्रीरामकृष्णस्तं ज्ञापयति यस्यैव नित्यत्वं तस्यैव लीला-य एवाखण्डसच्चिदानन्दः स एव लीलायै बहूनि रूपाणि स्वीकरोति। एवमच्युतोदारकथां ब्रुवन् गतबाह्यसंज्ञो भावमग्नचेताः पुनरपि तं प्रवदति। तात, ब्रह्म सुमेरुवदचलम् किन्तु अचलं तत् चलत्यपि।

पुनरपि प्रेमानन्दमत्तो निन्दितगन्धर्वकण्ठः श्रीरामकृष्णो गायति—

कोऽद्धा विवेद रुद्राणीं, षड् दर्शन सुदु-
र्लभामित्यादि— (उक्तं द्वितीयकथायाम्)
शिवो यस्या जपन्नाम न मृतो विषपानतः।
कन्यासौ नैव सामान्या तन्मातापि महीयसी॥
कटाक्षेणैव कुरुते जन्मस्थिति लयं भुवः।
या ब्रह्माण्डमशेषञ्च स्वकुक्षौ स्थापयत्यपि॥
विपन्ना विबुधा यस्याश्चरणं शरणं गताः।
देव देवो महादेवो यत्पादतलमाश्रितः॥

न केवलं शिवस्यासौ सती माता नमस्यते।
महाकालेन दिग्वासा हन्ति शत्रून् विशेषतः॥
चित्रं तदधिकं नाम महाकालस्य वक्षसि।
संस्थिता साच निर्वक्ति प्रसादो मातुरुत्कटा॥
सर्वा लीलेति चित्त त्वं सावधानं यतस्व तत्।
तेन ते भविता बुद्धिः शुद्धा कल्याण कारिणी॥

सुरापी न सुरापायी जयकालीति सम्वदन्
मातृनाममदोन्मत्तो निन्दितो मद्यपायिभिः॥

ज्ञान शौण्डिक योगाख्ये मत्त' चित्त' प्रवृत्तितो ।
मूलमन्त्राख्य यन्त्रास्त' तारानाम विशोधितम् ।
यत् पिबेत्तत् सुरापस्य चतुर्वर्गः करस्थितः ।

चिन्तयाञ्च' मनः श्यामारत्नमत्यन्त दुर्लभम् ।
तत् पादाब्जे चिर' चित्त न्यासश्चात्यन्त दुर्घटः ।
दुःसम्वादः शिवस्यापि सुलभस्ते कथम्भवेत् ।

श्यामापदाकाश गत'
मन: पत' प्रधावति ।
मन्द्वातेन पापेन
झटित्युपगत' भुवम् ॥

चिन्तामध्याः शिक्षितेन जन्मन्यत्र सुचिन्तितम् ।
यत्र नास्ति निशाप्राप्तस्तद्देशीयो जनो मया ॥
सन्ध्या वन्ध्यीकृता सन्ध्या दिनयोरप्यभेदतः ।

निर्भयाय पदायाह' दत्त्वा प्रणान् यमादपि ।
गतभीतिर्महामन्त्र' कालिनाम निवद्धवान् ॥
स्वशिखायान्तथा देह' विक्रीयाह' भवापणे ।
क्रीतवानुत्तम' द्रव्य' दुर्गानाम भवापहम् ॥
स्थापितो हृदये कालीनामकल्पतरुर्मया ।

यस्माय दर्शनीयोऽसौ मम संग्राहकाय तु॥
दूरीकृता देहगता दुर्जनाः षडह पुनः।
दुर्गेति संस्मरन् यात्रां विधाय स इति प्रियः॥
रामप्रसादो निवक्ति मातुरत्यन्त सेवकः॥

मनः स्वस्मिन् सुखं तिष्ठ
मा याहि त्वं गृहान्तरम्।
यदिच्छसि तदेवाप्यं सन्धेहि पुरमान्तरम्॥
मोक्षदोऽहमकुण्ठः सन् शुद्धां भक्तितु कुण्ठया।
दित्सुरस्मि स मे भक्तः सेव्यः सर्वैर्ज्जगज्ज़यी॥
वृन्दारण्ये न चान्यत्र गोपगोपीगता हि सा।
शुद्धा भक्तिस्तयाबद्धो नन्दस्याज्ञां स्वमस्तके।
वहाम्यहं पितृबुद्ध्या गेहे तस्य विशेषतः॥

श्रीरामकृष्णो गीतं परिसमाप्य कथाव्याजेन तमुपदिशति।

श्रीरामकृष्ण.—(पण्डितं प्रति) वेदादि शास्त्राणि बहूनि सन्ति। किन्तु साधनं तपस्याञ्च विना ईश्वर प्राप्ति र्न घटते।

''किञ्च-शास्त्रनिहितमर्थजातं विज्ञाय तदुचितानि कर्माणि कर्त्तव्यानि। यथा कश्चित् जनः पञ्च पुष्कल मिष्टान्न मेकं वस्त्र-ञ्चेत्यादि संवाद पूर्ण पत्रं प्रेषयामास। परन्तु पत्रं प्राप्तोऽपि स

पत्रस्य हस्तच्युततया पत्रस्थापनस्था नन्निस्सरणेन च पत्रार्थं न विवेद। पुनश्च प्रदीपं गृहीत्वा महता प्रयासेनान्विष्य च तत् प्राप्य तदर्थमवधार्य्य तत्याज, यतस्तदा पत्रेणालम्। प्रयोजनन्तु पत्रार्थस्यैव।

"पठनात् श्रवणं श्रेयस्ततो दर्शनं श्रेयस्तरम्। गुरुमुखात् साधुमुखाद्वा श्रवणं धारणामधिकां जनयति तादृशा श्रवणेन शास्त्रीयासारांशस्य वर्ज्जनार्थं न मनोयोगापेक्षा। हनुमानवदत् भ्रातः, केवलं रामं विना नक्षत्रतिथ्यादिकं न जानामि।

"श्रवणात् साक्षात्कारो महीयान्। यत्र साक्षात्कारेण संशयोऽपैति। शास्त्रेषु सन्ति वहवः पदार्थाः। परन्तु ईश्वर पादपद्मे भक्तिं चित्तशुद्धिञ्च विनैव विफलमेव सर्वम्। यथा पञ्जिकायां लिखितमस्ति विंशाढकमितं जलं-किन्तु पञ्जिकानिष्पेषणात् ततो नैकोऽपि जलकणो निःसरति।

"यावदीश्वरसाक्षात्कारो न जायते, तावदेव हि शास्त्रविचरणावुद्धिरुदेति। यावद् भृङ्गा पुष्पमधु न पिबन्ति, तावदेवहि तेषां गुञ्जनानि। परन्तु तेषां मधुपानोत्तरकालं यथा कदाचित् स्फुटध्वनिरतिरुचिरा प्रादुर्भवति। मदिरामत्तस्य जनस्य जयकालीतिध्वनिरुदेति, तथेश्वरप्रत्यक्षोत्तरं केवलमीश्वरवार्त्ता परमानन्द दात्रीं निर्वक्ति।

"ज्ञानी तु नेति नेतीति सर्वप्रतिषेधबुद्ध्या यमानन्दमनुभवति, तद्ब्रह्म। ज्ञानिनः स्वभावस्तु विधिनिषेधादि नियमानुसारेण हि वर्त्तते। कश्चिदेकदा मां चानकनाम स्थानं निनाय। तत्र बहवः साधवो दृष्टाः। तेषां साधूनां कश्चित् वस्त्रं सीव्यतिस्म (सर्वेषां हास्यम्)। अस्मान् दृष्ट्वा वस्त्रसीवनं विहाय पादोपरि पादं निधायास्माभिः सह कथयामास। (सर्वेषांहास्यम्) ईश्वरीय-कथां प्रश्नं विना नैव कथयन्ति ज्ञानिनः। आदौ आगच्छन्तं लोकं दृष्ट्वा प्रक्ष्यन्ति, भो कुशलं ते सर्वमिति।

"किन्तु विज्ञानिनः स्वभावो भवति ततो भिन्न एव। तथाहि विज्ञानी उपरतेन्द्रिय उदासीनः स्खलित वस्त्रः कदाचित् कक्ष-गतवस्त्रो वा बालकतुल्यः।

"अरणिमात्रे निहितो वह्निरिति प्रमावदस्त्येवेश्वर इति प्रमा यस्य स एव ज्ञानी। किन्तु विज्ञानिनो बोधस्तु ततोऽ-धिकः। यतः स हि अनलं दारुगतं मत्वा तेनान्नं पक्त्वा भुक्त्वा च बलमापन्नः सन् भवति विज्ञानी। स तु घृणालज्जा-मानापमान-मोह-दम्भ-द्वेष-पैशुन्याद्यष्टपाशरहितः कामक्रो-धाद्याभासमात्र मनुसरन् तिष्ठति।"

पण्डितः—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः"

श्रीरामकृष्णः—एवम्, एकदा कश्चिदर्णबपोतः सागरं चलन् नातिदूरस्थस्य चुम्बकशैलस्य समाकर्षणात् प्रस्खल-

ल्लोहकीलको बभूव।

"एकदा कृष्णकिशोरस्य गृहं प्राप्तं मां स पप्रच्छ, किमर्थं ताम्बूलं भुङ्क्ते ? मयोक्तं, यथारुचि ताम्बूलं भुञ्जीय, दर्पणे मुखं पश्येयं, सहस्र कन्याभिर्विवस्त्रः सन् नृत्येयम्। तदानीं कृष्णकिशोरस्य पत्नी कृष्णकिशोरं तिरस्कुर्वती बभाषे, "किमुक्तवान् परमहंसदेवम्। किं कथयसि त्वम् ?

'एतदवस्थायां (समाधेरुत्तरकालं जीवन्मुक्तौ) कामक्रोधादिकं विनश्यति। प्राकृतजनस्येव तस्यदेहः प्रतिभाति, परन्तु तदन्तःकरणं निर्मलं वर्त्तते।"

कश्चित् भक्तः-ईश्वर-साक्षात्कारोत्तरं देहो वर्त्तते न वा ?

श्रीरामकृष्णः—कस्यचित् लोकसंग्रहाय देहो वर्त्तते-गङ्गास्नानात् पापं विनश्यति, तेन च मुक्तिरुत्पद्यते, किन्तु नेत्रराहित्यं नापैति। पापजनितं भोगयोग्यं जन्मजातं न भवति। कुलाल भ्रमिबदवशिष्टमवश्यं क्षीयते। तदानीं काम क्रोधादीनां दाहे शरीरं प्रारब्ध कर्मनिष्पत्तये तिष्ठति।

पण्डितः—तत्तु देहमूलं संस्कार इति कथ्यते।

श्रीरामकृष्णः—विज्ञानी तु सदैवेश्वरं पश्यन्नुदासीनतामुपैति। स च नेत्रे निमीलयन्नपि आत्मानं पश्यति। कदाचिद्वा सच्चिदानन्दतो गुणमयीं लीलां कदाचित् लीलाया नित्यतामा-

क्रामति ।

पण्डित:—अस्यार्थः सम्यक् नावगतः ।

श्रीरामकृष्ण:- स तु नेतीति नेतीति चतुर्विंशति तत्त्व प्रतिषेधेन नित्याखण्ड सच्चिदानन्दमवधारयति । पुनश्च तद्भूमिमारूढोऽपि सच्चिदानन्दमेव जीव जगच्चतुर्विंशति तत्त्वजातमित्यनुभवति ।

"क्षीराद् दधि· ततो मथितात् नवनीतं जायते । नवनीतादनन्तर· बोधस्तु तक्रादेव नवनीतं नवनीतमेव तक्रमिति । कार्य्यकारणयोरभेदात् "

पण्डित:—(भूधरं प्रति) अयमर्थो ज्ञातो नवा ? दुर्विज्ञेयमेतत् ।

श्रीरामकृष्ण:—पुनश्च विज्ञापयति । नवनीतेन कार्य्यरूपेण कारणरूपं तक्रं प्रतिपादितम् कारण सत्तया कार्य्य सत्तेव कार्य्य सत्तयापि कारणसत्ता प्रतीयते ।

"हैयङ्गवीनं विहाय तक्रं, तक्रं विहाय हैयङ्गवीनं चिन्तयितुमशक्यम्, यस्तक्रं विना न वनीतं न भवति । तथैव नित्याभ्युपगमे लीलावश्यमभ्युपगन्तव्या । सोपानारोहावरोहवत् । सगुणनिर्गुणब्रह्मसाक्षात्कारोत्तरकालं तथाभूतावस्था जायते । साकारस्तु चिन्मयरूप:, निराकारस्त्वखण्ड सच्चिदा-

नन्द:।

इदं सर्वं यद्यमात्मेति जानन् विज्ञानी कृत कृत्यो भवति, तदानीमिदं ज़गत्तु आनन्दागारं प्रतीयते अथ संसारो भ्रम-स्थानमिति वदति ज्ञानी। रामप्रसादनामा भक्त: कवि र्भ्रमागारमयमित्यवादीत्। केनचित् तत्प्रत्युत्तरव्याजेनद-मुक्तम्—

आनन्दमय संसारे सर्वदैव सुखं लभे,
भिषग् बुद्धि र्न ते भाति वेत्सि सामान्यतो यत:।
कुटीरं हि सुखस्यायं संसार सर्ववैभव:,
जनकस्तु महातेजा राजेह च परत्रच।
सुखोपायं सुसम्पाद्य सुखं दुग्धमिवापपौ।

(सर्वेषां हास्यम)

"विज्ञानी तु ब्रह्मानन्दं विशेषेण बहुधा निरन्तरं पिबति। यथा—केन चित् दुग्धं-श्रुतं केनचित् तद्दृष्टं, केनचित् तत् पीतम्, एवं ब्रह्मोपलब्ध्यविशेषेऽपि विज्ञानी निपीय दुग्धं लब्धानन्द: सहर्षो भवति बलवान्।"

श्रीरामकृष्णस्तु तूष्णीमास्ते कियत्क्षणम्। पण्डितस्तु दक्षिण पूर्वालिन्दे ताम्रकूटं पातुं प्रतस्थे। तत: प्रत्यावृत्त: पण्डितो भूमावासने उपविष्ट:। श्रीरामकृष्णस्तु क्षुद्रखट्वायामु-पविष्ट: सन् कथयतीति।

श्रीरामकृष्ण—(पण्डितमाह) आनन्दस्त्रिविधः—विषयानन्द-भजनानन्द-ब्रह्मानन्द भेदात् कामिनी कनकादीनां, भोगजन्यो य आनन्दः स विषयानन्दः। तत्र हि विषयसुखे प्रायेण सर्वे सक्ताः। ईश्वरगुणनामानि कुर्वतां य आनन्दः स भजनानन्दः। परमात्मसाक्षात्कारादुत्तरं य आनन्दः स ब्रह्मानन्दः। ब्रह्मानन्द लाभानन्तरमृषीणां यथेच्छमाचरणं युज्यते।

"श्रीचैतन्यदेवस्य बाह्यदशार्द्ध बाह्यदशान्तर्दशाभेदेन त्रिविधावस्था जाता। यदा बाह्यदशामापन्नः श्रीचैतन्यस्तदा ईश्वरनामगुणकीर्त्तनानि विधातुं समर्थ आसीत्। अर्द्ध बाह्यदशा नाम यदा तस्य बहिर्विषये स्वल्पचेतना जायते। भगवत्साक्षात्कारो यदा समाधौ तदास्यादन्तर्दशेति।"

हाजरा—(पण्डितं प्रति) एतेन सर्वसंशयास्तिरोहिताः किमु?

श्रीरामकृष्णः-(पण्डित माह) यत्र मनोनाश स्तत्रैव समाधिरिति कथ्यते। यत्र समूलमहमिका दूरमुपैति, तत्रैव जडसमाधिरिति, स च भवति ज्ञानिनः। यत्र सेव्यसेवकास्वाद्यास्वादकरसरसिकभावमात्रं विराजते, स एव चेतन समाधिरित्युच्यते। एष समाधिर्भक्तियोगावलम्बिनो जायते। शर्कराभोजने प्रीतिर्न तु तदाकारप्राप्तौ इति तस्याशयः।

पण्डितः—यदि स (परमात्मा) अहमिकां (कस्यचित्) समूलं विलापयेत् शर्करात्मकं प्रापयेत् तदा तस्य किं भवेत् ?

श्रीरामकृष्णः—(विहस्य) इहाभिप्रायं विभज्य प्रकाशय। मातः कौशल्ये तवाकूतं प्रकटय वारमेकम्। (सर्वेषां हास्यम्) शास्त्रैः किमु सनकसनातन सनन्द सनत्कुमार नारदादयो न प्रतिपादिताः।

पण्डितः—एवं ते शास्त्रतो विज्ञेया एव।

श्रीरामकृष्णः—त्वया श्रीमद्भागवतमधीतं न वा ?

पण्डितः—तस्य कियदंशमधीतवान् नतु सम्पूर्णम्।

श्रीरामकृष्णः- स चेश्वरो दयामयः कल्पतरुरिव सर्वाभीष्टप्रदः। तं प्रार्थय। यदा यत् यो वाञ्छति तदा तस्य तत् पूरयति स भगवान्। कमीश्वरो भक्तस्य मनोरथं न पूरयेदिति ?

पण्डितः—पूर्वमेतत् सम्यक् न विभावितम् साम्प्रतं बुध्यते मया विभक्तवाक्येन तद्भवताम्।

श्रीरामकृष्णः—ब्रह्मज्ञान लाभानन्तमीश्वरेच्छया योऽहङ्कार लेशो विद्यते सतु भक्तोऽहमित्याकारो विद्यावृत्ति विशेष इत्युच्यते सद्भिः। तेन इमामनन्तलीलामास्वादयति स ज्ञानी। घर्षितमूषलचूर्णविशेषैरकावन यदुकुल ध्वंसश्च भवतः। तस्मात् लोक संग्रहार्थं विद्यावृत्ति न जहाति।

"कृत्यस्तु भीताः। पुनः पुनो जनिमृत्यादिभ्यो विशङ्कमानास्ते-मुक्तिमिच्छन्ति। येन केन प्रकारेण भवसागरमतिक्रम्य न पुनरावर्त्तानिह इति तेषामाशयः। प्लवमाने क्षुद्रकाष्ठखण्डे यदि विहङ्गमो निवसति तेन काष्ठखण्डं निमज्जति क्षुद्रत्वात्। करपत्र-विदार्य्यमाणे सुमहति वृक्षे स्वयमेव प्रवहति सति तमाश्रिताः प्राणिनः सुखं तिष्ठन्ति न च वृक्षस्य कियदप्यधोगमनं भवति। यथावा धूम्रपोतः स्वगर्भस्थान् लोकान् बहून् निर्विघ्नं सागरमतिक्रामति।

"ऋषिषु मुख्या विज्ञानिनो नारदाद्याचार्य्या यथेच्छं कर्त्तु-मर्हन्ति। यथा निपुण क्रीडनदक्षा अक्षदेवनेषु पञ्चाङ्कान् षड-ङ्कान्वा प्रयोजनमक्षैः सम्पादयन्ति, तथाङ्कपातदक्षास्ते केशानू-र्ध्वोष्ठगतानन्तरान्तरा सुखं मर्दयन्ति। ज्ञानमात्रापरा ज्ञानिनस्तु भयशीला। यथा नैपुण्यहीना अक्ष क्रीडारता अक्षदेवनेषु येन केन प्रकारेण वारमेकं विजयं प्राप्ताः सन्तः कृतार्थमात्मानं मन्यन्ते न पुनः क्रीडितुमिच्छन्ति। विज्ञानी तु विगतभयलेशः सगुण-निर्गुणोभय प्रत्यक्षकृत् कृतसम्वादो लब्धब्रह्मानन्दः सर्वेषां साधकानामुत्तमः। स च सच्चिदानन्दं विचित्य तत्र विलयं गतोऽपि आनन्दित चित्तो भवति, अजात विलये लीलावस्थितश्च प्रमोद-मुपैति। ज्ञानीतु नेतीति विचारयन् स्वप्नमिव पश्यति निःसारं

सर्वम्। मम हि भुजयोः परिवर्जनात् सर्वसंग्रहः फलतो लीलायां नित्यबोधसुखे ब्रह्मणि वासस्थानं केवलं सुखाय।

श्रूयतामाख्यायिका—एकदा काचित् वैवाहिका अपरां वैवाहिकां ययौ। तत्र सा विचित्रान् क्षौमतन्तून् वयतिस्म। आगतां वैवाहिकामवलोक्य प्रमोदिता सती बभाषे, हे वैवाहिके, तवागमनेनात्यन्तमानन्दो मे जातः। त्वदर्थं मिष्टान्नमानेतुं गच्छामिहट्टमित्युक्त्वा सा गता। अत्रान्तरे अन्या वैवाहिका विचित्रान् क्षौमतन्तून् निरीक्ष्य लोभवशात् तत्स्य कञ्चित् तन्तुस्तवकमपहृत्य तमपह्नोतुं स्वकक्षं प्रापितवती। अपरा तु मिष्टान्नमानीय परमोत्साहेन तां भोजयन्ती तन्तून् ददर्श। सा तु तन्तुस्तवकमेकमपहृतं बाहुमूले सङ्गोपितञ्चेति, तत् तन्तुग्रहणार्थं चातुर्य्येण सव्याजमवादीत्, हे वैवाहिके, बहुदिनान्तरं तव दर्शनात् महानन्दो जातः। अतःपरमसुखयोगात् शुभदिने परस्परं नर्त्तुमिच्छावः। सा चोक्तवती, तत्तथास्तु तथैव ममापि तव दर्शनादानन्दः संजातः। ततस्ते ननृततुः। नृत्यदशायां नवागता वैवाहिका स्वभुजमेकमुत्थाप्य नृत्यपरेति समीक्ष्य उक्तवत्यापरा, हे वैवाहिके, बाहुद्वयमूर्द्ध्वं नीत्वा भुजाभ्यां परिरभ्य नृत्यावोऽद्य महानन्दत्वात्। तथापि सा हस्तैकेनापहृतं तं संगोप्य हस्तान्तरेण ननर्त्त। तदापरा वैवाहिका जगाद, न हि

तथाभूतं नटनं शोभनं ते । यथाहं बाहुद्वयमुत्थाप्य नृत्यामि, तथा त्वमपि कुरु। तथापि सा हसन्ती तन्तून् हस्तैकेन संगोप्य हस्तान्तरेण नटन्ती अब्रवीत्, हे वैवाहिके, यो यथा वेत्ति, स तथा नृत्यति, तथाभूता नाहं कक्षन्यस्तहस्ता। किन्तु मुक्तो मे हस्तयोगस्ततो निर्भयोऽकुतभयोऽतो वेदान्तविचारणां नित्य-लीलाञ्च स्वीकरोमि।"

येषान्तु मुक्तिसम्भानेच्छा तेषां सर्वार्थपरित्यागात्मक-मुक्तोन्नतकरयोगो न सम्भवति। न च नित्यां लीलामादातुं स्वीकर्तुम्वा शक्नुवन्ति ते। अपिच बन्धनजनितं भयमस्ति तेषाम्। विज्ञानिनान्तु कुतोऽपि भयं नास्तीति किं श्रीरामकृष्ण-स्याकूतम् ?

श्रीरामकृष्णः—एकदा केशवचन्द्रमवदम्, हे केशव, अह-मिका त्यागं विना कुतः परमार्थ लाभः ? अतः परित्यागस्तस्य विधेयः तदाकर्ण्य स मामिदमाह, हे महात्मन् ! तत्त्यागे तु मम सम्प्रदायस्यास्तित्वं न स्थास्यति। तदात्र अविद्यावृत्ति-रूपा या अहमिका सैव त्याज्या, न तु विद्यावृत्तिरपि, यथा बालकोऽहमीश्वरस्य दासोऽहमिति। तादृशविद्यावृत्त्यवलम्बने नास्ति दोषः। संसारिणां या अहमिका सा केवलमविद्यापरिपक्वा-हन्तैव। सा हि यष्टिरिव ब्रह्मानन्द सागरः सलिलं द्वैधीभावं

नयति। परन्तु बालकोऽहमीश्वरस्य दासोऽहमिति विद्यावृत्तिस्तु जलेरेखावत्। तया रेखया चाभिन्नप्रायं जलमिति न दोषाय। शङ्कराचार्य्येण तु लोकसंग्रहार्थं विद्यावृत्तिरङ्गीकृता।

"लब्धेश्वरसाक्षात्कारो जीवन्मुक्तो जनोऽहमहमित्येव विद्यावृत्ततो भक्तितो वा तिष्ठति भगवदिच्छातः। साकारं निराकारञ्चेश्वरं पश्यतो हनुमतः सेव्यसेवकतया भक्त्याचावस्थानं प्रसिद्धम्। स च एकदा रामचन्द्रं कदापि पूर्णभावेन कदा सेव्यसेवकभावेन वा तिष्ठेयमित्यादि वाक्यमब्रवीत्। देहबुद्ध्यातु दासोऽहं जीव बुद्ध्या त्वदंशकः। ब्रह्मबुद्ध्या-त्वमेवाहमिति मे निश्चला मतिः।

"एकदा कृष्णविरहातुरा यशोदा श्रीमतीं जगाम तद्वि-रहमवलोक्य सा श्रीमती स्वस्वरूपं प्रदर्शयन्ती जगादेदं, कृष्णस्तु चिदात्मा अहन्तु तच्छक्तिः अतस्त्वं वरं प्रार्थय। यशोदायाचत, हे मातः ब्रह्मज्ञाने न मेभिलाषः। परन्तु ध्याने कृष्णरूपदर्शनं कृष्णभक्ताङ्गसङ्गं भक्तसेवां तद्गुणनामकीर्त्तनञ्च सदैव यथा कर्तुं शक्नोमि तथाकुरु, वरमित्येव याचे।

"कदाचित् गोपीनामीश्वरीयरूपदर्शनलालसा जाता। ततश्च श्रीकृष्णस्ता यमुनायां निमज्जनायोपदिदेश तत्र ता निमज्जनमात्रेणैव वैकुण्ठं समुपगताः। तत्र षडैश्वर्य्यशालिनो

भगवतो रूपाणि पश्यन्तीनां तासां मनांसि तत्र न रेमिरे। तदानीं श्रीकृष्णमूचुस्ताः, हे श्रीकृष्ण, बालगोपालदर्शनं तत् सेवाञ्च विना नान्यत् किमपि याचामहे।

"मथुरागमनात् पूर्वं गोपीभ्यो ब्रह्मज्ञानं दित्सुः श्रीकृष्णस्ता बभाषे। हे गोप्यः, अहं सर्वभूतान्तर्बहिर्विराजे। कथं यूयमेकं रूपं पश्यथ ? तदाकर्ण्य ता ऊचुः, हेकृष्ण, किमस्मान् विहाय गन्तुमिच्छसि ? तेन ब्रह्मज्ञानमुपदिशसि ?

"गोपीनां भावस्तु वयं श्रीमत्याः श्रीमती चास्माकमिति।"

कश्चित्भक्तः—भक्तोऽहमिति किं समूलेन कदापि नापैति ?

श्रीरामकृष्णः—कदाचित् याति विलयम्। तदानीं ब्रह्मसम्विज्ञान समाधिमुपैति। नतु सर्वदैव तथाभूतावस्था जायते। ममापि तत् कदाचित् समूलं विलयं याति। यथा स्वरविदः नि, इति निषादे चिरावस्थानं न सम्भवति, परन्तु सा, रे, गा, मा, पा, धा, इति स्वरान्तरेषु। मातरं वदामि, हे मातः, मह्यं ब्रह्मज्ञानं मा प्रयच्छ। यदा पूर्वं सगुणेश्वरभक्ता आगतास्तदनन्तरं ब्राह्मभक्ता आययुस्तदानीमपि प्रायशो विगत बाह्यसंज्ञस्तथाभूतः समाधिर्मुहुर्मुहुर्जायते स्म। सामाधेरुत्तरं लब्धबाह्यसंज्ञामात्रेणैवावदम्, हे मातः, ब्रह्मज्ञानं मा प्रयच्छेति।

पण्डितः—अस्माकं प्रार्थना ईश्वरेण स्वीक्रियते न वा ?

श्रीरामकृष्णः—कल्पतरुमीश्वरं निकषा यो यत् याचते स तत् प्राप्नोति। किन्तु कल्पतरुसन्निधौ स्थितेनैव कृता प्रार्थना सिध्यति।

"अपि चास्त्येव प्रकारः—यथा—स ईश्वरो भावग्राही। यो यदभिलषति तस्य तत्तथा भवति। यथाभावस्तथालाभ इति जनोक्तिः। एकदा कश्चित् मायावी इन्द्रजालं राजसमीपे दर्शयन्नन्तरान्तरा वदति स्म हे महाराज, देहि धनं देहिवस्त्रञ्चेति। तदानीं तथाभूतोक्तौ तस्य जिह्वा वैपरीत्येन तालु मूलमापन्ना तेन च सपदि कुम्भको बभूव। तेन कुम्भकेन न वचनं नस्पन्दनं नच किमपि शब्दश्चासीत् तस्य। तं तथाभूतं निरीक्ष्य इष्टकनिर्मितं शवाधिष्ठानं निर्माय तत्र प्रोथितवन्तः राजपुरुषाः। केचित् सहस्रवत्सरानन्तरं तत्स्थानं खनित्वा समाधिमन्तमिव पुरुषमवलोक्य अयं कश्चित् साधुरिति विभाव्य पूजयामासुः। तदानीं तस्य शरीरे परिचालिते सति जिह्वा तालुमूलात् निष्क्रान्ता, तदा लब्धचेतन्योऽसौ तारमवादीत्—चलतु भोजविद्या राजन्, देहि धनं वस्त्रञ्चेति।

"अहं रुदन् अवदञ्च, हेमातः, मम विचारणाबुद्धौ वज्रपातो भवतु ?"

पण्डितः—विचारणा बुद्धिस्तवाप्यासीत् ?

श्रीरामकृष्णः— कदाचित् एव आसीत्।

पण्डितः—तर्हि कथ्यतामस्माकमपि यास्यतीति। तव कथं विलुप्ता?

श्रीरामकृष्णः—अपगता सा मातुरिच्छातो येन केन प्रकारेण वा।

श्रीरामकृष्णस्तु कियत्क्षणं तुष्णीमवस्थाय पुनः कथयति।

श्रीरामकृष्णः—ईश्वरः कल्पतरुः। तत् सन्निधौ स्थितेनैव विहिता प्रार्थना सिध्यति।

ईश्वरेण विचित्रं कियदव्यक्तं विहितम्। तस्यानन्तानि ब्रह्माण्डानि, मम तु तदसीमैश्वर्य्यज्ञानेनालम्। यस्य तदीयापारासीमैश्वर्य्यजिज्ञासा वर्तते, तेन पूर्वमीश्वरलाभाय यत्नो विधेयः। तल्लाभानन्तरं स एव प्रकाशयति तस्यैश्वर्य्यम्। यथापूर्वं यदु मल्लिकस्य (कस्यचित् धनिनः) कियन्ति गृहाणि कानिचित् न्यस्तधन सूचकानि राजकीयपत्रादीनीत्यादिनालम्। येन केन प्रकारेण तेन सार्द्धमालापनमिति मे प्रयोजनम्। नत्वन्यत् किमपि। प्रार्थनया वृत्यतिक्रमेण वा भृत्यताडनया वा मेलनं तेन सह। तत् संलापानन्तरं स एव तदैश्वर्य्यमाख्यापयति माम्। तदानीं तद्भृत्याः कर्मचारिणश्च समानयन्ति। (सर्वेषां हास्यम्)।

"कश्चित् विभूति ज्ञानं नेच्छति। शौण्डिकस्य पण्यागारे शुण्डायां वा कियदाढक परिमिता मदिरा वर्त्तते इति जिज्ञासया किम् ? यदि पात्रैक परि मित मद्य सेवनेन कापि पूर्त्तिः स्यात्।

"ज्ञानयोग भक्तियोगौ आत्मप्राप्त्युपायभूतौ। एतयोर्येन केन च पथा तत्प्राप्तिर्घटते। परन्तु ज्ञानमार्गाद् भक्तिमार्गः शिवः सुगमः।

"अपि च कः श्रेयान् पन्था इति विचारेण वा किम् ? विजयेन सार्द्ध (केनापि वैष्णव महात्मना) बहूनि दिनानि संलापो मे बभूव। मयोक्तमिदं कश्चित् जनो याचते स 'हे ईश्वर, कथम्भूतस्त्वम् ? तव कुशलं वर्त्तते न वा ? मां दर्शय रूपं ते इति', (प्रार्थनया सर्व मनोरथः सिध्यत्यर्थः)

"ज्ञान विचारमार्गस्तु दुर्लक्ष्यः क्लेशकरः। एकदा भवानी शैलराजं नानारूपाणि प्रदर्श्योवाच, भोः पितः यदि ब्रह्मज्ञानमिच्छसि कुरु सत्सङ्गम्।

"किं स्वरूपं ब्रह्मेति वक्तुं नार्हम्। (यतो वाचो निवर्त्तन्तेऽप्राप्यमनसा सहेति श्रुतेः)। तटस्थलक्षणेन तद् वाच्यं भवतीति रामगीतायामुक्तम् (यथाच-जन्मादस्य यत इति यथावा सत्यं ज्ञानमनन्तं ब्रह्म)। गङ्गायां घोषोऽस्तीति वाक्येन लक्ष्यार्थ तीरस्य यथा प्रतीतिस्तथासत्यं ज्ञानमनन्तं ब्रह्मेत्यादि

वाक्येन निर्गुणं ब्रह्म लक्षितं भवति, एतावदेव तटस्थ लक्षण-फलम्।

"निर्गुणब्रह्म साक्षात्कारो घटते एव। परन्तु तत् साक्षात्-कारः क्लेश साध्यः। विषय बुद्धि लेशे सत्यापि तत् प्रत्यक्षं न सम्भवति। इन्द्रियार्था रूपरसगन्ध स्पर्शशब्दा स्तत्त्यागेन विलीने मनसि बोधविषयो भवत्यात्मा तदानीं (समाधौ) सत्तामात्रमिति बोधो जायते।"

पण्डित:—अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः। (कठोपनिषत्)।

श्रीरामकृष्ण:-तदुपलब्धये वीर-सखी-दासी सन्तान भावेषु कश्चित् भावोऽवलम्बनीयः।

मणिमल्लिक:—तेनैव निष्ठा जायते।

श्रीरामकृष्ण — सखीभावेनासं बहुकालम्। तद्दशायां मयोक्तं आनन्दमय्या ब्रह्ममय्याश्च दास्यहम्। हे दास्यः, मां दासीं कारयथ। तेन ब्रह्ममय्या दास्या अहमित्यभिमानोक्त्या यथेच्छं विचरेयम्।

"यैः साधनं विना ईश्वरो लब्धस्त एव नित्यसिद्धा इति कथ्यन्ते। ये तु जपतपस्यादिभिः साधनैरीश्वरमनुभवन्ति त एव सिद्धा इति ख्याताः। अपिच कश्चित् कृपासिद्धो वर्त्तते-

यथा-सहस्र वत्सरमन्धकारगृहस्य तमः सपदि निवृत्तं स्यात् प्रदीपसम्बन्धमात्रेण ।

किञ्च हठात् सिद्धः कश्चिदस्ति—यथा कदाचित् कस्यापि धनिनो दयामासाद्य दरिद्रोऽपि दासीदास कन्याधनादि लाभेन महान् समृद्धः स्यात् । अपिच स्वप्ने दर्शनात् स्वप्नसिद्ध इत्युच्यते ।"

सुरेन्द्रः—(विहस्याह) वयं साम्प्रतं शयामहै तेन च स्वप्ने धनिनो भवेम, बाबु इति भाषा प्रसिद्धां पदवीं प्राप्नुयाम वा ।

श्रीरामकृष्ण.—सस्नेहेनाह—त्वं बाबु-नाम्ना प्रसिद्धोऽसि, यथा क, इति वर्णे आकार योगेच सति पुनश्चाकारसंयोगेनालम् । (सर्वेषां हास्यम्)

"भिन्न स्वभावभाजो नित्यसिद्धाः—यथारणिमन्थन कालेऽग्नि र्जायते, तेन विनापि उत्पद्यते । तथा नित्यसिद्धाः स्वल्पेन तपसा परमात्मनं लभन्ते, तेन विनापि प्राप्नुवन्ति । परन्तु ते च परमात्म साक्षात्कारानन्तरं तपश्चरन्ति । यथा कुष्माण्डादिलताया अग्रे फलं पश्चात् पुष्पं जायते", इत्येवं श्रुत्वा पण्डितो हसति ।

श्रीरामकृष्णः—नित्यसिद्धास्तु वेदप्रसिद्ध होमा पक्षिणीवत् । अत्यूर्द्ध्वे वियति स्थिता होमानाम्नी पक्षिणी । सा तत्रैव सूते,

तदीया: शावकास्तु वियतः पतन्तो भूमियोगात् पूर्वमेव पक्षचञ्च्वादिकमापन्ना मातरं धावन्ति। यथा प्रह्लादस्य क इति वर्णलिखनमात्रेण नेत्राश्रु पपात। किम् ? नित्यसिद्धाक्षराणि होमाख्यपतत्र्यादिदृष्टान्तेन तथेव स्वावस्थां ख्यापयति इङ्गितेन श्रीरामकृष्णः ?

विनीतभावं पण्डितमवलोक्य श्रीरामकृष्णः मुदं प्राप्य तत्स्वभावजान् गुणान् समुपस्थितान् भक्तान् कथयति।

श्रीरामकृष्णः—(भक्तान् प्रति)अस्य पण्डितस्य उत्तम एव स्वभावः। यथा मृत्कुड्यां कीलकवेधनं सुखावहं न तथा प्रस्तरकुड्यां तत्र कीलकवेधे कीलकमात्रं नश्यति न तेन पाषाणो विकारमुपैति, तथाभूतस्वभावा मनुजा सन्ति येषामसकृदनेकश ईश्वरीयकथाश्रवणेनापि विवेको नोदेति यथा नक्रगात्रमच्छिन्नं भवत्यासना।

पण्डितः—नक्रस्योदरे वर्षाख्यास्त्राघातेनैव विदारणा भवति

श्रीरामकृष्णः—[विहस्य] बहुना शास्त्रदर्शनादिना पठनेन च दीर्घदीर्घवाक्येन वालम्। यः कार्मुकशिक्षार्थी तेनादौ धनुषा रम्भावृक्षस्य वेधनं ततः शरवृक्षस्य, ततो वर्तिकायास्तत उड्डीयमानस्य पतत्रिणो वेधनमुचितम्। तथैवादौ सगुणेश्वरे मनसःस्थितिर्विधेया। नित्यसिद्धनारदादिवत् त्रिगुणातीता भक्ताः सन्ति। ते तु भक्त्या सगुणेश्वरानुरक्ताः सन्तः श्यामश्चिन्मयः, धाम चिन्मयम्, चिन्मयः सेवकस्तथेश्वरवत्तदीयभक्तश्च नित्यो, धामापि नित्यमिति परिपश्यन्ति।

"ये तु नेति नेति विचारमात्रपरा ज्ञानिनस्ते त्ववतारं न स्वीकुर्वन्ति। हाजरानामा कश्चित् जनो वदति—भक्तार्थमवतरतीत्यवतारः, न तु ज्ञानविचारपरार्थम् यतस्ते सोऽहम्भावेना वतिष्ठन्ते।

श्रीरामकृष्णः भक्ताश्च कंचित् कालं तूष्णीम्भूताः।

पण्डितः—(ससम्मानमाह) केन निर्दयताभावोऽपैति यतो हास्यावलोकनेन मांसपेशीनां कापि क्रिया शोके बोधे च स्नायूनां काचन-वृत्तिः स्फुटीभवतः।

श्रीरामकृष्णः—(विहस्याह) नारायणशास्त्रिणा तथैवोक्त शास्त्रपठनं दोषावहं, यतो हि तेन तर्कबुद्धिरुदेति।

पण्डितः—(ससम्मानमाह) त्वत्प्रसादबलाभावायापि उपायः कश्चन विद्यते वा न वा?

श्रीरामकृष्णः—अस्त्येव विवेको नाम एकस्मिन् गीते चेदं निबद्धम् अस्तीश्वरस्तु नो नाम विवेकस्तत्त्वबोधकृदिति।

विवेकोऽयं विना जनानां वाक्यं मुखान्न निःसरति। एकदा समाध्यायी नाम कश्चिज्जनो व्याख्यानान्तरमवदत्, नीरस एवेश्वरः। कथं वा तस्य रसराहित्यम्? यतो "रसो वै स" इत्यस्ति श्रुतिः। अपरश्च तथा बभाषे मम मातुलस्य गोशालायां बहवः अश्वाः संतिष्ठन्ते। कुतस्तिष्ठन्ति गोशालायामश्वाः? (सहासं पण्डितमाह) आमिषे वटकेव लक्ष्यसे त्वम्। यथा भर्जितामिक्षा सनकरोऽन्यस्य प्रीतये स्यात् तथैव

तत्रापयपरिपक्वस्य रसरूपे परमेशे कियद्दिनमवस्थानं भवेत्, तत्र परिपक्वः सन् सुष्ठु रसं ग्रहिष्यसि।"

पण्डितः स्मितं कुर्वन्नाह—आमिक्षावटिका तु दग्धाङ्गारसमा जाता।

श्रीरामकृष्णः—(विहस्याह) न हि न हि तैलपाकवर्णमापन्ना।

हाजरा—सुष्ठुभर्जितोऽयं सुष्ठु रसं ग्रहिष्यति।

श्रीरामकृष्णः—(पण्डितम्)समधिकशास्त्रपठनं निष्प्रयोजनम् बहुशास्त्राध्ययनेन तर्कबुद्धिरुदेति तोतापुरीत्थमुपदिदेश। गीता गीता इति दशधोच्यमाने त्यागी त्यागीति बोधः सम्भवति जनानाम्। विवेकवैराग्येश्वरप्रीतयस्तु भवन्तीश्वरप्राप्त्युपायाः। धेनुर्यथा वत्सं प्रति विपुलमाकुलीभावं प्रकटयति तथैव यदि चित्तं तदा सिध्यतीश्वरानुरागः।

पण्डितः—श्रुतिषूक्तमिदं तत्त्वं यत् धेनोर्वत्स इव अस्माकमीश्वर एक एव विभाव्यो भवितुमर्हति।

श्रीरामकृष्णः—भगवन्तं शरणं गतः सर्वमन्यद् विहाय तदर्थं क्रन्देत्। यदि कश्चित् विवेकवैराग्यादिकमवलम्ब्य सर्वत्यागी भवेत् तर्हि तेन त्यागेन तस्येश्वरसाक्षात्करो घटेत। तत्र निष्ठायां व्याकुलतायां च जातायामुन्मत्तदशा भवति, ज्ञानवर्त्मनि तिष्ठतो भक्तिवर्त्मनि स्थितस्य वा ऋषेर्दुवाससो ज्ञानोन्मादो नाम दशाविशेषो बभूव। संसारिणां ज्ञानं सर्व-

त्यागिनां ज्ञानञ्चेति भिन्नं द्विविधं ज्ञानम्। संसारिणां हि स्वदेहगृहकृत्यज्ञानमात्रम्, प्रदीपस्य गृहाभ्यन्तरमात्रप्रकाशवत् नान्यत् किमपि। सर्वत्यागिनां तु सूर्यालोक इव बोधो बाह्यमान्तरं च सर्वमुद्भासयति। स तु देवे श्रीचैतन्ये व्यक्तः तदीये बोधे स्निग्धभक्तिविधुदीप्तिरपि निविष्टा। फलतो ब्रह्मज्ञानं भक्तिरूपं प्रेमापि तत्र स्फुट एव। भावभक्तिरूपस्तावदेकः पन्थाः, अभावाख्यश्चापरो नेति नेतीतिरीत्या ब्रह्मसाक्षात्कारोपायात्मकस्तयोरभावं निरूपयसि त्वम् स हि सर्वपथाधिको गरीयान्, यत्र गुरुशिष्यविभेदोऽपि नावतिष्ठते। ब्रह्मज्ञानार्थी शुकदेवो जनकमभिजगाम। जनकस्तु ब्रह्मसाक्षात्कारे सति दक्षिणार्पणं नोपपद्येतेति प्रदीयतामादौ गुरुदक्षिणेति तमवादीत्।

भावादयः सर्वे पथपदवाच्याः। अनन्तानि मतानि अनन्ताः पन्थानः, परन्त्वस्ति असौ प्रसिद्धिः—कलौ तु नारदीया भक्तिरेव विधेया। अस्मिन् वर्त्मन्यादौ भक्तिस्तत्परिपाके सति सा भक्तिर्भाव इति कथ्यते। ततः श्रेयसी महाभावप्रेमणी। ते तु जीवानां नोदितः। यदि कस्यचित् ते स्यातां सिद्ध एवेश्वरलाभः।

पण्डितः—[ससम्मानमाह] परोपपत्त्यर्थं नानाकथावतारणा भवत्यावश्यकी।

श्रीरामकृष्णः—त्याज्यमंशं विहाय सारं वदेत्।

पण्डितस्तु श्रीमन्मणिमल्लिकनामकपुरुषेण संवदति। मणिमल्लिकस्तु ब्राह्मसमाजभुक्त एव। पण्डितस्तु ब्राह्मसमाजीयगुणदोषानुद्ग्राह्य तर्कयामास। परमहंसदेवः खट्वायामुपविष्टस्तत्तर्कं शृण्वन् हसति।

अन्तरान्तरा वदति चेदं सत्त्वस्य तमः "शूरस्य भाव" इति एतत् सर्वमप्यावश्यकमेव। अन्यायमसत्यमाचरणं च दृष्ट्वा तूष्णीम्भावस्तत्र नावलम्बनीयः। यथा कदाचित् काचिद् भ्रष्टा स्त्री तव परमार्थनाशाय प्रवृत्ता तदानीं तथाविधशूरभावावलम्बनेन तां वदेत्, यदि त्वं मम परमार्थं नाशयसि सपदि त्वदीयं शरीरं भिनद्मीति।

पुनश्च हसन्नेव श्रीरामकृष्णो वदति—पुरातनब्राह्ममतानुवर्तिनं मणिमल्लिकं तवाभिमतं ग्राहयितुं नार्हसि त्वम्। चिरन्तनसंस्कारस्त्वकस्मात् नापैति। तत्र गाथेयम् कश्चित् हिन्दुरत्यन्तभक्त आसीत्। स सर्वदैव जगदम्बामुपास्ते स्म। यदा यवनानां राज्याधिकारो ज़ातस्तदानीं ते पूर्वोक्तहिन्दुभक्तं परिगृह्य बलेन यवनं चक्रुः। अपि च तैरुक्तम्-सम्प्रति यवनत्वमापन्नस्त्वमतआल्ला आल्लेति भज। स चापि महता दुःखेन आल्ला आल्लेति वदन् परमेकैकशो हे जगदम्बे इति अवादीत्। तदानीं यवनाएतदभिलक्ष्य तं प्रजह्रुः। तेन प्रहारेण वेपमानः सन्नब्रवीत्- हे यवना मा प्रहरत। यतो

युष्माकमाल्लाख्यां देवतां ग्रहीतुं यतेऽहम् । परन्तु अस्माकं जगदम्बा कण्ठाग्रावस्थिता सती युष्माकमाल्लाख्यां देवतां विताडयति। (सर्वेषां हास्यम्)।

श्रीरामकृष्णो विहस्य पण्डितं ब्रूते, "मणिमल्लिकं मा वद किञ्चित्, यतो रुचीनां वैचित्र्याधिकारि भेदात्, भुक्त भोग्य सामर्थ्य नानात्वाच्च विभेदो लोकवुद्धिषु बाहुल्येन वर्त्तते वर्तिष्यतेचेति संसार गतिः। ईश्वरेण बहूनि मतानि बहवो धर्माश्च विहितानि। नहि सर्वे ब्रह्मज्ञानाधिकारिणो भवन्ति। अतस्तेन सगुणेश्वरोपासना प्रवर्त्तिता, साच सुचिरं स्थास्यतीति मन्तव्यम्"।

सर्वे समुपस्थिता भक्तास्तूष्णीम्भूताः। श्रीरामकृष्णस्तु पण्डितं प्राह, गच्छ देवालये देवं पश्य, तत उद्यानं विचर कियत्क्षणम्।

सार्द्ध पञ्चघटिका जाताः। सबन्धुः पण्डितो देव दर्शनार्थं जगाम। कश्चित् भक्तोऽपि तेन सार्द्धं ययौ।

कियत् क्षणानन्तरमध्यापकेन सह श्रीरामकृष्णो विचरन् सोपानबहुल घट्टं गङ्गापुलिनमाजगाम। तत्र बाबुरामाशयमध्यापकं कथयति, "स च वदति साम्प्रतं तस्यालं पठनेन"।

स्मिताननः श्रीरामकृष्णः—तत्र गङ्गातीरे पुनश्च पण्डितमवलोक्य आह, अहो, किमु त्वया कालीमन्दिरं न गन्तव्यम्?

तच्छ्रुत्वा जातविस्मयः पण्डितः ससम्मानमाह दर्शनार्थं गमिष्यामयेव भवता सार्द्धम्। ततश्च श्रीरामकृष्णः प्राङ्गणमध्यवर्त्तिना पथा काली मन्दिरमागच्छन्नवादीत्।

कस्यचित् गीतस्यायमंश इत्युक्त्वागायत्।

न कृष्णरूपा जननी कदाचित्
दिगम्बरी सा खलु कालरूपा।
हृत्पद्ममुद्भास्य चिरं चरन्ती
महेश्वरी संशरणं ममास्तु॥

पुनश्चागायदिदं-हृदि प्रज्वाल्य ज्ञानाग्निं ब्राह्ममयीरूपं पश्य ततश्च कालीमन्दिरं प्राप्तः श्रीरामकृष्णो भूमौ नतशिराः प्रणनाम। सा विश्वजननी पादसरोज समर्पित जवाकुसुम बिल्वपत्रा त्रिनयनी नानावस्त्रालङ्कार परिवृता वराभयदायिनी स्नेहप्रेम परिप्लुत दृष्टिः सुचिरं तिष्ठति।

तां मूर्तिमवलोक्य भूधरस्य भ्राता जगाद 'नवीन भास्करेणेयं मूर्ति निर्मितेति श्रुतं मया—श्रीरामकृष्ण- उवाच, तत्तु नाहं जाने परन्तु ज्ञातं मयेयं चिन्मयीति।

अथ सभक्तः श्रीरामकृष्णो विचरन् दक्षिणास्यः सन् नाट्यमन्दिरमागच्छति। तत्र बलिस्थानं निरीक्ष्य पण्डितः कथयति। 'विश्वमाता तु छागबलिं द्रष्टुं नार्हति। (सर्वेषां-हास्यम्)

ततश्चाध्यापकेन सह श्रीरामकृष्ण आगत्य बाबुराममाह, 'अये आगच्छ, सन्ध्या समुपस्थिता। देवः स्वगृहस्य पश्चिमे भागे वर्त्तुलाकारालिन्दे उपविष्ट भावमग्नोऽर्द्ध बाह्यदशामापन्नः। तदारात् बाबु रामाध्यापकौ समुपस्थितौ।

साम्प्रतं सेवकाभावेन श्रीरामकृष्णस्य सेवादिकं सुष्ठु न भवति। राखालस्तु न तिष्ठत्यत्र। केचित् विद्यन्ते परिचर्य्यार्थं. परन्तु श्रीरामकृष्णस्य स्पर्शनादाद्ययोग्यास्ते भवन्ति कदाचित् तस्य भावाख्यदशायाम्। तथाच परमहंसदेवः सङ्केतेनाह बाबुरामम्, 'ह—च्छु, ना, रा, जु इति तस्यार्थस्तु एतद्दशायां (भावावेशकाले) अन्यस्य कस्यचित् स्पर्शनार्हो न भवामि। अतस्त्वं तिष्ठ साम्प्रतम्। तावता च भवति कुशलं मे।

पण्डितस्तु देवालये देवं दृष्ट्वा श्रीरामकृष्ण गृहमागतः। परमहंसदेवः पश्चिमस्थितवर्त्तुलाकारालिन्दात् बभाषेपण्डितम् अहो, किञ्चित् मिष्टान्नं जलञ्च गृहाण। न मया सन्ध्योपासना कृता इत्युक्तं पण्डितेन। तद् वाक्यं श्रुत्वा श्रीरामकृष्णस्य हृदि दिव्यभावोदयः, तेन च प्रेमोन्मत्तो दण्डायमानः सन् गायति गीतम्। तथा हि—

गयागङ्गाप्रभासादिं काशीं कांचीं न कामये
काली कालीति वदतो मम लुप्ता जपा यदि॥
त्रिसन्ध्यं यो वदेत् कालीं सन्ध्यां पूजां स नेच्छति।

सन्ध्या तमनुसन्धत्ते सन्धानं नाधिगच्छति।
जप यज्ञ पूजाहोम क्रियाश्चान्या न कामये।
काम यज्ञास्तु ता न्यस्ता ब्रह्ममय्याः पदाम्बुजे॥

हरिप्रेमोन्मत्तः श्रीरामकृष्णः पुनश्च गदति। यावत् ॐ इत्युच्चारणेन मनो न लयं याति तावदेव हि सन्ध्योपासनादिकमपेक्षणीयम्।

पण्डितः—तथाच पीत्वा जलादिकं सन्ध्योपासनां कुर्य्याम्?

श्रीरामकृष्णः— नहि तव भावस्रोतसि प्रतिबन्धको भवेयम्। साधकः कालेन फलं विन्दते। तं कालं विना त्यागो न विधेयः। यथा फलं पक्वं सत् पुष्पं जहाति तस्मात् स्वत एव वा पतति पुष्पम्। गुल्म नारिकेलस्य वृक्षस्य शाखाच्छेदनेन विदारणेन वा भवति विनाशः॥

सुरेन्द्रो गृहं गन्तुं प्रवृत्तः। ततः स्वकीयाश्वयानेन गमनायाह्वयति बन्धून्।

सुरेन्द्रः—अहो, बाबु महेन्द्रः, गमिष्यसि नवा? अप्राकृते ब्रह्मणि लब्धभावः श्रीरामकृष्णस्त्वाह. अग्रे, सुरेन्द्रः, अश्वबलानुरूपा यानवाह्या जना नेतव्या, नतु ततोऽधिकाः।

पण्डितस्तु सन्ध्योपासनार्थं गतः। अध्यापकबाबुरामौ गमिष्यतः कलिकता नगरीम्, अतः प्रणेमतुस्तं भगवन्तं परम-

हंसदेवम्। साम्प्रतं नैव प्रकृतिं गतः, अप्राकृत भावलग्नः श्रीरामकृष्णो बाबुरामाध्यापकौ आह नैव वाणी निःसरति मुखात् मे। तिष्ठतां कञ्चित् कालम्। तेन च तौ अपेक्षेते परम-हंस देवादेशम्। परमहंसदेवो व्यजनार्थमादिशति बाबु रामम्। तेन च तौ बाबुरामाध्यापकौ देवं व्यजनेन प्रीणयामासतुः।

श्रीरामकृष्णः—(स्नेहेन अध्यापकं प्रति) पूर्ववत् किमर्थं पुन पुनस्त्वं नागच्छस्यत्र ?

अध्यापकः—(ससम्मानमाह) नहि तत्र कारण विशेषो विद्यते, परन्तु गृहे काचनापेक्षासीत्।

श्रीरामकृष्णः—बाबुरामस्य गृहरहस्यं ह्यो मयावगतम्। तेन च तं वदाम्यत्र वासार्थम्। कालेन हि विहङ्गादिकमण्डानि सूते। बाबुरामादयास्तु पूतात्मानः। अद्यावधि कामिनीकनकादौ ते नैवासक्ताः। किमिह तवाभिमतम् ?

अध्यापकः—(ससम्मानमाह) एवं नह्यद्यापि तेषु कश्चित् कृष्णरेखापातः।

श्रीरामकृष्णः—यथा नवीने घटे दुग्धेन पूर्णे नहि तत् दुग्धं नष्टं भवति।

अध्यापकः—(ससम्मानमाह) एवं तत्तथैव। बाबुरामेणा-प्युक्तं शनैः शनैस्तिष्ठेयमत्र। अन्यथा द्वन्द्वकलहादिकं

सम्भाव्यते स्वभवने। मयोक्तं 'त्वं शनिवारे रविवारस्वा आगच्छेः।'

पण्डितस्तु सन्ध्योपासनां कृत्वा भूधरेण स्वज्येष्ठ भ्रात्रासह आजगाम। अतः परं तेन जलं पीतम्. भूधरस्य ज्येष्ठभ्राता कथयति, किं भविष्यत्यस्माकम्, ब्रवीतु-कञ्चित् उपायम्?

श्रीरामकृष्णः—यूयं तावत् मुमुक्षवः। मुमुक्षूणां व्याकुलतायां सत्यामीश्वर प्राप्तिः घटते। श्राद्धस्यान्नं मा अशान भ्रष्ट नारीवत् तिष्ठ संसारे। यथा—भ्रष्टा योषित् एकाग्रेण मनसा गृहोचितानि कर्माणि करोति, परन्तु मनस्तस्याहर्निशं जारमेवानुगच्छति। तथा सर्वदैव ईश्वरे मनः संयोजय, तदनुरक्तः सन् सांसारिकाणि कर्माणि कुरु।

पण्डितस्तु जलं पिबति। श्रीरामकृष्णस्तं पिबन्तं वदति, आसने उपविश्य जलं पिब। सम्पन्ने जलपाने पुनराह—गीतामध्येस्ति? तत्र गीतायामुक्तं भगवता बहवः पुरुषा यं सम्मानयन्ति तत्रास्ति काचिदीश्वरीया विशेष शक्तिरिति।

पण्डितः—"यद् यद् विभूतिमत् सत्वं श्रीमदूर्जितमेव वा"।

श्रीरामकृष्णः—त्वय्यवश्यमेवास्ति ईश्वरीया शक्तिः।

पण्डितः—(ससम्मानमाह) यद्व्रत परायणोऽहं तत्वाध्य-

वसायेन करिष्यामि नवा ? तस्य निर्बन्धातिशयेन श्रीरामकृष्ण: अकथयत् 'ध्रुवं करिष्यसि। तदनन्तरं तत्प्रसङ्गावसानं प्रसङ्गान्तरञ्च प्रस्तुतम्।

श्रीरामकृष्णः— शक्तिः स्वीकरणीया। विद्यासागरो मामपृच्छत्—ईश्वरः किं कस्मै प्रचुरां शक्तिं दत्तवान्। मयोक्तं कथं तर्हि कश्चित् जनः शतं जनानद्‌र्घति। कथञ्चा महाराणी भिक्टोरिया सम्माननां कीर्तिञ्चैतावतीं प्राप्तवती यदि तत्र शक्ति विशेषो न स्यात्। अपिच तमवादिषम् त्वया शक्ति विशेषः स्वीक्रियते न वा ? तदा स आह ध्रुवमभ्युपगम्यते मया।

पण्डितो गृहं गन्तुं प्रवृत्तः सन् नतशिरसा श्रीरामकृष्णं ननाम। पण्डित बान्धवाश्च तं प्रणेमुः। श्रीरामकृष्णस्तान् प्रत्याह—आगमिष्यन्ति पुनर्वारं श्रीमन्तः। गञ्जिका (गाँजा इति भाषा प्रसिद्धम्) यस्तु यः पिबति यो वा मद्यं तादृशो जनस्तथा विधमन्यं दृष्ट्वा आनन्दी भवति तमालिङ्गति च। यथा वा गौरात्मीय गात्रे जिह्वावलेहं कुरुते, तदन्यां गां शृङ्गाभ्यां निवारयति च तथैव वृत्तिरस्माकम्। (सर्वेषां हास्यम्)

पण्डिते गते श्रीरामकृष्णः सहासमुवाच, अयं पण्डितो दिनैकमात्रं परिचित आर्द्रीभावमापन्नः। प्रकृत्या कमनीय एव सर्वाणि मतानि स्वीकरोति।

आषाढे मासि शुक्लपक्षे सप्तम्यां तिथौ पश्चिम दिग्भागे अलिन्दे चान्द्रःकिरणो निपतति। तत्र श्रीरामकृष्ण उपविष्टः। अध्यापकस्तं प्रणमति। श्रीरामकृष्णः सस्नेहमाह, त्वया गन्तव्यम् ?

अध्यापकः—(ससम्मानमाह) एवं गमिष्याम्येव।

श्रीरामकृष्णः—मम मनस्येवं निश्चयो वारमेकं सर्वेषां गृहं गमिष्यामि तत्र गृहमपि वारमेकं गमिष्यामि।

अध्यापकः—(ससम्मानमाह) मम कल्याणकरीयमुत्तमा-कथा! (१)

---

(१) आकरग्रन्थस्य श्रीश्रीरामकृष्णकथामृतस्य तृतीय-भागस्य नवमखण्ड स्यायमनुवादः

# सप्तम कथा

दक्षिणेश्वरे राखाल अध्यापक महिमचरण प्रभृतिभि र्भक्तैः सह श्रीरामकृष्णः।

पञ्चाशीत्यधिकाष्टादशशत खीष्टाब्दीये आगष्ट मासे नवम दिवसे (खी: १८८५, आगष्ट ९ ता,) दक्षिणेश्वरे स्वसंस्थाने श्रीरामकृष्णो निवसति। तत्रद्विजस्तत्पितृ श्रा त्रध्यापक-प्रभृतयश्च समुपस्थिताः।

द्विजस्य वयः प्रायेण षोडशान्तम्। तन्मातृ वियोगनान्तरं पिता तु द्वितीया सहधर्मिणी स्वीकृता। पुत्रश्च साध्यापकः श्रीरामकृष्ण निकषा प्रायेण मासमागच्छति। पिता तु ततो न सुखी भवति। बहूनि दिनानि यावत् श्रीरामकृष्ण द्रष्टुमिच्छति द्विजस्य पिता। परन्तु नावसरं लभते। लब्धावकाशस्मद्य समागतः।

श्रीरामकृष्णः—(पितरं प्रति) भवत् पुत्रा इहागच्छन्ति, तन्निमित्तं मा कार्षी श्चिन्ताम्। वदाम्यहं तान्, ज्ञानमास्वाद्य संसारे तिष्ठन्तु। यथा—महता परिश्रमेण केनचित् प्राप्त

सुवर्णम्। सच तत् ग्राम्यकनकं मृत्तिकायां पेटिकायां जले वा निधातुमर्हति। यत्र क्वचित् स्थापने वा तस्य रत्नस्य काचित् न हानिः। तथैव स्थातव्यमत्र।

अपिचोक्तं मया, "असंसक्ताः सन्तः कुरुत संसार कृत्यम्। पनस भेदकः हस्ते तैलं लिम्पन् पनसानि भिन्द्यात्। अन्यथा तन्निर्गत क्षीर सिकृथेन भवेदज्ञानां लेपः। अपरिपक्व-मनसः संसारे निवसतो जनस्य मनो मालिन्यमेति। ज्ञान लाभोत्तरं संसार कृत्यं साधयतस्तथावस्था कथमपि न सम्भवति। जलमिश्र दुग्धस्य जले भवत्येकीभावः न तयोः पृथक् सत्ता कथमपि सुज्ञेया स्यात्। पयसो नवनीते समाहृते सति जले तन्निक्षिपेच्च, तस्य न काचित् हानिः"।

द्विजस्य पिता—ससम्मानमाह, एवम्।

श्रीरामकृष्णः—विहस्य पुनरप्याह, पुत्रेभ्यो भवत् कोपनं यत्, न तत् कोपनं कोपाभास एव भय प्रदर्शनार्थञ्च।

"यथा—ब्रह्मचारिणोक्तः सर्पः। हे व्याल, निर्बोधोऽसि, दशनं मया निवारितम्, नतु फोंस इत्याकारं भाषाप्रसिद्धं गर्जनम्। त्वं यदि गर्जनं कुर्य्यास्तर्हि तव शत्रवस्त्वां प्रहर्त्तुं नार्हेयुः तथैव ते तिरस्कारः पुत्रेषु।" श्रुत्वैतत् पिता हसति।

श्रीरामकृष्णः—पितुः पुण्यवशात् सुपुत्रो जायते, यथा पूर्त्तकारिणः पुण्यज्ञापकं सरोवरस्य स्वच्छजलम्। आत्मनो

जायते इति आत्मज इत्युच्यते। पितृपुत्रयोरभेदात्। त्वमेव पुत्र रूपेण वर्त्तसे। अपि च त्वं केनचित् रूपेण विषयी, केनचित् रूपेण कर्मचारी रूपान्तरेण विषयभोक्ता, भक्तश्च पुत्र रूपेण।

'श्रुतं मया, त्वमत्यन्तं विषयासक्तोऽसि, परन्तु न तथा-भूत स्त्वम्। (सहास्येन) एतत् सर्वं भवता ज्ञातम्। परन्तु सुचतुरतया अनभिमतार्थोऽपि स्वीक्रियते"।

श्रुत्वैतत् द्विजस्य पिता हसति।

श्रीरामकृष्णः—अत्रागमनेन भवान् किम्भूतः सर्वथेति तव पुत्रा ज्ञास्यन्ति। पिता नाम कथं कियान् महानिति च। पितरौ विहाय ये तु धर्मानाचरन्ति, तेषान्तु कुतो धर्माः। नहि तदा-चरणं धर्म इत् वाच्यम्। मानवानां बहूनि ऋणानि सन्ति यथा-दैव ऋणं, पैत्रऋणमार्षञ्च। तदधिके मातुः कलत्रस्यच द्वे ऋणे स्तः। साध्वी पत्नी यत्नतः पालनीया। भर्तु र्वियोगात् प्राक् तदर्थं तेन सम्पत्तिः संस्थापनीया, यया भरणं तस्या निर्वहति।

वृन्दावने मातृ ममानवस्थानं जातम्। तत्र यदैव दक्षिणे-श्वर मन्दिरावस्थिताया जन्मदाया मातुः स्मरणं तदैव तत्र मे मनः स्थितिं न लेभे।

"वदामीमान्, परमात्मनि संलग्नमनसः सन्तः संसारे ति-ष्ठन्तु। संसार हानाय मे नोपदेशः। परन्तु उपदिशामि तान्

युष्माभिः संसारधर्माः पालनीयाः, ईश्वरेऽपि मनो योजयितव्य-मिति।"

पिता—ब्रवीमि तान् यत्नतो विद्या शिक्षणीया। नत्वत्रा-गमनं तेषां वारयामि अपिच बालकैः सह हास्य कौतुकादिना कालन्ते मा नयेयुरिति कामये।

श्रीरामकृष्णः—अस्य द्विजस्य पूर्व जन्मार्जितं पुण्य मेवासी-दित्यवश्यं स्वीकर्त्तव्यम्। अन्यथा त्रयाणां पुत्राणामस्य पुत्रस्य कथं वैराग्यं ज़ातम्।

"यस्य यः स्वभावः स तत्स्वभावजकर्मणा प्रेरितः सन् तथा करोति। तत्र बलवता निग्रहेणालम्। यथा च "प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति।"

पिता—एवमेवं भवति।

श्रीरामकृष्णो द्विजस्य पितृ सान्निध्यमागच्छन् भूमावासने उपविष्टः। स ईश्वरीय कथां ब्रुवन् वारमेकैकं तस्मिन् गात्रे हस्तं निदधाति। समागतेव सन्ध्येति श्रीरामकृष्णोऽध्यापकम-ब्रवीदिमान् देवालये देवं दर्शय। असुस्थतया तैः सार्द्धं मया गन्तुं न शक्यते। नीरोगश्चेत् अगमिष्यम्। अध्यापकस्तदा-देशेन द्विजादिभ्यो देवान् प्रदर्श्य मिष्टान्नानि च दत्तवान्। ते तु दृष्ट्वा देवान् भुक्त्वा प्रसाद सानन्दं श्रीरामकृष्ण मभिवाद्य जग्मुः।

रात्यूष्ट घटिका जाताः। महिम चरणनाम्ना केन चित् पुरुषेण सह श्रीरामकृष्णः कथयति। राखाल अध्यापक-प्रभृतयः समुपस्थिताः। महिम चरणस्त्वद्य रात्रौ स्थास्यति।

श्रीरामकृष्णः—(महिमचरणं प्रति) केदारस्य किदृश्यवस्था ज़ाता? तेन किं दुग्धं दृष्टं पीतम्वा?

महिमः—साम्प्रतं स आनन्द भोक्ता।

श्रीरामकृष्णः—नृत्य गोपालस्तु?

महिमः—तस्योत्तमावस्था।

श्रीरामकृष्णः—एवं तत्तथास्तु. गिरिशघोषस्य स्वभावः किमु परिवर्तितः।

महिमः—तस्यापि उत्तमावस्था जाता. परन्तु स च भिन्नस्वभावभाक्।

श्रीरामकृष्णः—नरेन्द्रस्तु?

महिमः—पञ्चदशवर्षेभ्यः पूर्वं यथासीत् तथा स इदानीं वर्तते।

श्रीरामकृष्णः—कनिष्ठो नरेन्द्रस्तु सरलो नवा?

महिमः—एवं सचात्यन्त सरलः।

श्रीरामकृष्णः—यथार्थमेव तव भाषणम्। (पुनरपि विचिन्त्य आह) अन्यः को वर्तते? येतु बालक भक्ता अत्रागच्छन्ति तेषां जिज्ञासा विषयद्वयस्य। यथा कोऽहमित्येकं (श्रीरामकृष्णः किं-

स्वरूप:) तेऽपि के इत्यपरम् तद्विषये ज्ञाते च तेषां साधनान्तरे भवति नावकाशः। बालक भक्तनां बहवो ममान्तरङ्गा भवन्ति। ये त्वन्तरङ्गास्तेषां मुक्तिर्नास्ति।

वायुकोणेच पुनरपि वारमेकं मम देहो भविष्यति। शुद्धात्म-बालक भक्तान् पश्यतो मम प्राणा: शीतली भवन्ति। तैर्विना कथं जीवामि। येतु पुत्र ोत्पादने रता: काम काञ्चन संसक्ता अभियोगे च व्यापृतास्तेषां दर्शनेन कुत: सुखं मे ?

महिम चरणस्तु शास्त्रात् श्लोकानुद्धृत्य श्रावयति। अपिच तन्त्रोक्त खेचरी भूचरी शाम्भवी मुद्रा: कथयति

श्रीरामकृष्ण: पुनश्च भाषते—मच्चित्तं समाधेरुत्तरकालं महाकाशे पतगवत् विचरती तकश्चित् प्रवदतिस्म।

"हृषीकेश स्थानादागत: कश्चित् साधुर्मम सामाधिं समीक्ष्य प्राह, पञ्चविध समाधिस्ते साकल्येन भवतीति पश्यामि। स च समाधि: पिपीलिकावत्, मीनवत्, पक्षिवत्, तिर्य्यगवच्चेति पञ्चधा विभक्त. स इत्युक्तं तेन।

"कदाचित् समाधि दशायां पिपीलिकागतिमनुसरन् वात: सञ्चरति, क्रमंणोर्द्ध्वभागं शरीरस्येत्युपलभे। कदा-चिद्वा समाधौ भावजलधि मापन्न आत्ममीन: सानन्दं खेलति। कदावा महावात: पार्श्व शायिनं मां वानरवत् विचालयन् मुद-मेति। तदा तूष्णी म्भूतस्य मे सहस्रारे वायुरसौ वानर इव

तूर्णमुत्प्लुत्य समुत्तिष्ठते। तेन हि तदानीं तूर्णमुत्प्लुतिं कामपि लभेय।

पुनश्च कदाचित् पतत्री यथा काण्डात् काण्डान्तरं व्रजति, महावायुरपि तथैवोत्तिष्ठते। तस्याश्रयस्तु दहन इव प्रतिभाति। किञ्च मूलाधारात् स्वाधिष्ठानं ततो मणिपुरं ततोऽनाहतमिति-रीत्या शिरोभागमाक्रामतिप्रबलः स वातः।

कदाचिद्वा महावायुर्महान् सदागतिः यदा कुटिलं चलन् शिरोभागमुपैति तदा समाधिरूपपद्यते।

अपिच प्रबुद्धां कुलकुण्डलिनीं विना ब्रह्मविद्या नोदेति। मूलाधारस्था कुलकुण्डलिनी चैतन्यमापन्ना सती सुषुम्ना नाड्या स्वाधिष्ठान मणिपुरानाहतादिकं भित्वा क्रमेण यदा मस्त-कमाश्रयते, भवति तावती महागतिस्ततः समाधिः सिध्यति।

"केवलेन पुस्तकपठनेन नोदेति विद्या व्याकुलात्मना भजनेन सा कुल कुण्डलिनी शक्ति जागर्ति। शास्त्रपठन-श्रवण जनितं ज्ञानं न पर्य्याप्तं तत्र।

"किञ्च यदा तथाविधा गतिर्मम जाता तद्व्यवहितपूर्वं सा कुलकुण्डलिनी यया रीत्या जागर्ति तथैव तामदर्शयत् मां परा-देवता। क्रमेण मे मूलाधारादि स्थितानि पद्मानि प्रस्फुटितानि, तदुत्तर काले समाधि र्बभूव तदिदं सुगोप्य वचनम्। अपिच

दृष्टं मया, मत्प्रतिमो द्वाविंश वर्षीय स्त्रयोविंशवर्षीयो वा युवा सुषुम्नान्तरं प्रविष्टो जिह्वया योनिरूप पद्मेन सह रमते तेन रमणेन पायू रस्थ-नाभि-हृत्-कण्ठ-भ्रू-शिरोऽवस्थितानि अधोवक्त्रानि चतुर्दल-षड्दल दशदल-द्वादशदल षोडशदल-द्विदल-सहस्रदल नामधेयानि पद्मानि क्रमेणो द्ध्र्वमुखान्यभवन्। तदवधिस्तु ममेयमवस्था, तत आरभ्येय मवस्था प्रचलत्यद्यापि।"

श्रीरामकृष्ण स्त्विमं ब्रुवन् खट्वाया उत्थाय महिम चरण-समीप उपविवेश। राखाल अध्यापक प्रभृतयो भक्ताः समुपस्थिताः।

श्रीरामकृष्णः—( महिमचरणं प्रति ) बहुदिनानि यावत् भवन्तं वक्तुमुत्सुकोऽस्मि। नैवावसरो लब्ध इति साम्प्रतं कथयामि साधनेनैव तथावस्थेति यदुक्तं भवता, तत्त न, यतस्त्वत्रास्ति मे कश्चन विशेषः।

श्रीरामकृष्णः किं रहस्यं वदिष्यतीति श्रोतुकामा अध्यापक राखाल प्रभृतयो भक्ताः समुत्सुका आसन्।

श्रीरामकृष्णः—सा परादेवता मामकथयत् कथाम्। नतु केवलं तदीयं दर्शनं मे जातम्। एकदा वटविटपि प्रान्ते अपश्यम्—सा देवता गङ्गायाः प्रादुर्भूय मत्समीप मागता यदपूर्वं जहास। साङ्गुलि भङ्ग क्रीडा रस मनुभवन्तीव मां बभाषे।

"किञ्च त्रिदिनमरोदम्, तेन रोदनेन वेद-पुराण तन्त्र-निहि-

तानि यानि निगूढ रहस्यानि तानि मह्यमदर्शयत् ।

"एकदासौ महामाया स्व माया किम्भूतेति मह्यं दर्शयामास। गृहमन्तरा स्तोकं ज्योतिः क्रमेण विततं सदमितं तत् जगदिदमुद्भासयामास।

"अपिचादर्शयत् महती दीर्घिका वारिपर्ण्याच्छादिता। वातेरिता सापसृता, ततस्तदीयं जलं दृष्टियोग्यमभूत्। पुनश्च झटिति वातेरिता सा वारिपर्णी नृत्यन्तीव सलिलं पिदधे। तावतायमभिप्रायो व्यक्तः। तज्जलन्तु सच्चिदानन्दो वारिपर्णी तु माया। तया माययाच्छादितः सच्चिदानन्द इति द्रष्टुं न शक्यः। यद्यप्यकस्मात् विद्युदिवोपलभ्यः स तथापि पुनर्माया तमावृणोति।

"किञ्च कीदृशा लोका (भक्ताः) अत्रागमिष्यन्तीति पूर्वमेव सा परादेवता मां प्रदर्शयति स्म। एकदा न्यग्रोध वृक्षतो वकुल वृक्षान्ते भूमिभागे श्रीचैतन्य देवं संकीर्तयतो जनांश्चादर्शयत्। तत्र च बलराममिमम ध्यापकमपश्यम्।

'केशवो पूर्वमदृष्टोऽपि समाधिदशायामवलोकितः स मया। किञ्च तं तदनुगामिनञ्च जनसङ्घं गृहमापूर्य्य तिष्ठन्तमप्यवलोकयामास। तत्र च विततपक्षं मयूरमिव शिरसि रजोगुणमणिनोपलक्षितं केशवं पक्षप्रायैरनुगामिभिर्निरूपयामास सा परादेवता माम्। तदानीं केशवः शिष्या-

नवदत् "असौ (श्रीरामकृष्णः) किं ब्रूते, तत् सर्वमवहित मनसः सन्तः शृण्वन्तु भवन्तः" । एतत् दृष्ट्वा मातरमवदम् हे मातः, आङ्गलमतानुवर्त्तिन इमे सर्वे। किमर्थमेतान् प्रत्युपदेशः। सा माता मामबोधयत्, कलि युगे तु भविष्यत्येवमिति। ततस्ते हरि नामानि मातृ नामानि च स्वीकुर्वन्तो जग्मुः। तेन च केशव सघात् विजयस्य विच्छेदं विदधे विश्वजननी। परन्तु आदिसमाजमसौ नाधिगतः।

श्रीरामकृष्णः—(स्वं प्रदर्शयन्नाह) अस्मिन् (मयि) कश्चित् विद्यते। अनेक कालेभ्य पूर्वं गोपाल सेन नामा कश्चित् बालकोऽत्रागाम। अस्मिन् (मयि)योऽस्ति स बालक वक्षसि चरणं निदधौ। तदा भावावेशेन तेन बालकेनोक्त 'मद्यापि तव विलम्बो वर्त्तते परन्तु ऐहिकभोगरतैः सह स्थातुं न शक्यते मया" इत्येवमुक्त्वा गृहं गतः, स बालकः शरीरं तत्याज। स एवायं नित्यगोपाल इति मे मतिरुदेति।

प्रभूतं महदाश्चर्य्यमुपलब्धं मया। तथाहि अखण्डे सच्चिदानन्दे वृतिरिवौपाधिकी द्वयी सृष्टिः। तत्रैकतो भक्ताः सगुणेश्वरवादिनश्चुनि केदार प्रभृतयः। परतश्चास्ति ज्योतिरद्भुतमतिरक्तेष्टकचूर्णजातमिव यदन्तरा समाहितो नरेन्द्रः प्रतिभाति। नरेन्द्रेति मया सम्बोधितः सन् नेत्रे समुन्मीलयन्नपि अवलोकितवान्। तदेङ्गितेन ज्ञातं मया सोऽयं सिम

लाख्ये स्थाने कायस्थ कुले नरेन्द्रः समजनीति । तदा गिरवजन-नीमवदम्, हेमातः, मायया तम् (नरेन्द्रम्) आवृणु । अन्यथा स समाधिना देहं त्यक्ष्यति । सगुणेश्वर वादी केदारस्तु क्षणम प्रकटः सन् समीक्ष्यच जातविस्मयो द्रुतं तिरोदधे ।

एतावता मन्ये अस्मिन्देहे स्वयमम्बा भक्तादिपरिवृता सती क्रीडति । यदा प्रथममियमवस्था जाता तदा दिव्यज्योतिषा देहोऽयं प्रदिप्त आसीत्, वक्षःस्थलं रक्तवर्ण मभूत् । एवमवलोक्य मातर मवदम्, हे अम्ब, अन्तरा प्रविश, मा बहिराविर्भव । तत एवास्य देहस्य दीप्तिहीनता । देहस्य तथात्वे मद्गी जनपीडा सुस्थिरेति निश्चितम् । परमिदानीं बहि न दीप्तिः, ततश्च भक्ताभासाः पलायन्ते । केवलं कामनारहिताः शुद्धा भक्ता एव स्थातुमुत्सहन्ते ।

"अस्मिन् देहे रोगस्य मूलन्तु ये सकामा भक्तास्ते इमं रोगं समीक्ष्य तिरोहिताःस्युरिति भक्तानां राजा भवेयमिति कामतो मातरं ययाचे ।

"पुनश्च मनसा अचिन्तयम्, ये तु सर्वात्मनेश्वरभजनपरा-स्तेषामत्रागमनमवश्यमेव भविष्यति । तत्तु जातं साम्प्रतं तथाविधाः सर्वे क्रमेणागच्छन्ति ।

"किञ्चास्मिन् देहे यो राजते मम पिता तं विवेद । सहि गयाधाम्नि स्वप्नाविष्टः सन् कुलदेवेन रघुवीरेणोपदिष्टः ।

"अहं तव पुत्रो भवेयमिति।' स एवास्मिन् वपुषि राजते। कामिनी काञ्चनादि त्यागः किमु मया विहितः ? स्वप्नेऽपि स्त्रीसम्भोगो नाभूत् मम।

"यदोलङ्गतोतापुरी वेदान्त तत्वं श्रावयामास; तदानीं तदवगत्या दिनत्रयेण समाधिर्बभूव। माधवीवृक्षं निकषा मम समाधिमवलोक्य स विस्मतः सन् 'किमिदमद्भुतमिति चभाषे'। चिलसत्यत्र वपुषि ध्रुवमात्मा इत्यवगम्य स उवाच, 'मां त्यज।' तद्वाक्यमाकर्ण्य भावमग्नचेतसा अवदम्, यावत् वेदान्त तत्त्व वोधो मे न जायते, तावत् तव गमनं न सम्भवति।

"तदानीमहर्निशं तदन्तिके वेदान्त चिन्तायां दिनं नयामि स्म। एतद् दृष्ट्वा ब्राह्मणी (भैरवी नाम्नी काचित् साधिका) अवदत्, तात, वेदान्तं मा शृणु, वेदान्त श्रवणेन भक्तिच्छेदस्ते भविष्यति।

"विश्वजननीमब्रुवम् हे मातः, कञ्चित् धनिनं विना कथं देहरक्षा कथम्वा साधुभक्तादीनां सेवा च भविष्यतीति ततो मथुर नामा कश्चित् धनी (रासमणि—जामाता) चतुर्दश वर्षान् मामसेवत।

"अस्मिन् देहे या अस्ति, सा तु पूर्वं कीदृशा भक्ता आगमिष्यन्तीति ज्ञापयति। मम पुरतो यदा गौराङ्गरूपं प्रति-

भाति तदावगच्छामि गौराङ्ग भक्त आगच्छति। यदि शाक्त-स्यागमनं भवेत् तत् पूर्व कालीरूपसाक्षात्कारो घटते।

"कुठी नामक प्रासादोपरि स्थित आरत्रिक समये उच्चै राजुहाव के नाम भक्ता कुत्र तिष्ठथ? तूर्णमागच्छथ। साम्प्रतं ते संमिलन्ति।

"स्वयमिह तिष्ठति सा देवता। स्वयमेव च भक्तादीन् परिगृह्य लीलां करोति प्रतिभक्तमास्था तु विस्मयकरी। कनिष्ठ नरेन्द्रस्य कुम्भकः स्वत एव भवति समाधिश्च तन्मा-नन्तु सार्द्ध घण्टाद्वयं तदधिकम्वा। आश्चर्य्यमेतत्!

सर्वाणि साधनानि, कृतानि यथा—ज्ञान योग भक्तियोग कर्मयोगायुर्वर्द्धक हट योगाख्यानि।

"अस्मिन् देहे कश्चन विद्यते। अन्यथा समाधेरुत्तर कालं कथं भक्तिभक्तादीन् संपरिगृह्य तिष्ठेयम्? कोयारसिं नामा कश्चित् पुरुषोऽवादीत्। 'पर समाधेः प्रत्यावृत्तो जनो न दृष्टः कदापि। त्वमेव नानकोऽसि।'

"सर्वासु दिक्षु कामिन्यः काञ्चनानि विद्यन्ते ऐहिक भोगरताः प्राणिनश्च विचरन्ति तत्रापि भावसमाधयो मुहु मुहु र्जायन्ते। मह-दाश्चर्य्य मेतत्! ब्राह्म प्रतापचन्द्रेण सह कुक् साहेवो यदार्णव-पोतमापन्नस्तदा तस्मिन् मम समाधिं निरीक्ष्य उक्तवान्, 'आः! भूताविष्ट इवायं जनः परिलक्ष्यते।'

राखाल-अध्यापकादिभिर्विस्मयेन श्रीरामकृष्ण मुखपद्म—विनि:सृता विचित्रा वाणी श्रुता। महिमचरणस्तु तत् सर्वं श्रुत्वापि ब्रूते. भवत: प्रारब्ध कर्मणा तथाभूतं सर्वमभूत्। तस्याशय: श्रीरामकृष्ण: कश्चित् त्यागी भक्तो वा। श्रीरामकृष्णस्तदभ्युपगम्य वदति, एवम्, प्राक्तनमेतत्। यथा प्रचुर गृहस्य धनवत: किमपि विश्रामालापादि स्थानं नाम वहिर्भवनम् भक्ता एवेश्वरस्य विश्राम मन्दिरम्।

श्रीरामकृष्णस्तु क्षुद्र खट्वायामुपविष्टः। महिम चरणस्येच्छा तु स स्वयमेव ब्रह्मचक्रं क्रीडाविशेषं रचयिष्यति, गृहमध्ये परमहंसदेव: स्थास्यति चेति। एवं विभाव्य स च राखाल अध्यापक-किशोरी प्रभृतीन् भक्तान् परिगृह्य भूमौ ब्रह्मचक्रं रचयामास। सर्वे ध्यानमग्ना भवन्तु इत्यप्युक्तं तेन। राखालस्य भावावस्था जाता। श्रीरामकृष्णस्तत उत्थाय तद् वक्षसि हस्तं निधाय मातृनाम चकार। तेन राखालस्य भावस्तिरोहित:।

अथ शर्वरी प्रायेण घटिकैक मिता बभूव। तदानीं चतुर्दशीनाम कृष्ण पक्षतिथि:। तेन गाढमन्धतमसं सर्वतो व्याप्तम्। केचन भक्ता भागिरथी तटस्थेषु सोपानेषु नि:सङ्गा: सुख-विचरन्ति।

एवम्भूते समये श्रीरामकृष्णः शय्याया उत्थाय बहिरागत्य विचरतो भक्तान् ब्रूते, अस्यां गभीर निशायामहत: शब्द:

श्रूयते इतितु तोतापुरी वचनम्।

महिम चरण:अध्यापकश्च भूमौ शयानौ स्तः। राखालस्तु 'क्याम्पेति भाषा प्रसिद्धायां खट्वायां शेते। अथ शेष-भूतायां यामिन्यां श्रीरामकृष्णः समुत्थाय पञ्चवर्षीय बालक-वत् दिगम्बरो भूत्वा स्व भवने विचरति।

अथ प्रत्यूषे श्रीरामकृष्णो मातृनामोच्चारयति। स च पश्चिम दिग्भागालिन्दं गतो गङ्गां ददर्श च। किञ्चागारकुड्य-न्यस्तानि देव देवी चित्राणि प्रणनाम। भक्ताश्च तल्पादुत्थाय श्रीरामकृष्णं प्रणम्य प्रातः कृत्य करणाय जग्मु:।

ततश्च श्रीरामकृष्ण: पञ्चवटी स्थाने केन चिद् भक्तेन सह कथयति। तेन भक्तेन स्वप्ने दृष्ट: श्रीचैतन्य देव:। एत-च्छ्रुत्वा सविस्मयः श्रीरामकृष्णो भावमग्नचेता आह—अहो! अहो!

भक्त:—( ससम्मानम् ) आह तत्तु स्वप्नमात्रम्।

श्रीरामकृष्णोऽश्रुपूर्ण नेत्रो गद् गद् स्वरेण चाह, स्वप्नदृष्ट-मपि दुर्लभमेतत्।

कस्यचित् भक्तस्य जाग्रदवस्थायामपि ईश्वरीय रूप दर्शनं जातमिति श्रुत्वा गदति परमहंसदेव:, नहि तदाश्चर्य्यम्।

साम्प्रतं नरेन्द्रोऽपीश्वरीयं रूपं पश्यति।

महिम चरण: प्रात:कृत्यं समाप्य देवालय प्राङ्गणे पश्चि-

दिगवस्थितं शिवमन्दिरं गतस्तत्र रहसि वेदमन्त्रमुच्चारयति। मणिस्तु गङ्गायां स्नात्वा श्रीरामकृष्णसमीपमागतः।

शोकसन्तापा ब्राह्मण्यपि तद्दर्शनाय समुपस्थिता। श्रीरामकृष्णः—( ब्राह्मणीं प्रति ) मणये प्रसादादिकं किञ्चित् प्रयच्छ। तत्तु कुडयादयु परि भागेऽस्ति।

ब्राह्मणी—भुङ्क्तां भवानग्रे। तदनन्तरं स ग्रहीष्यति। श्रीरामकृष्णः—( मणिमध्यापकम् ) अग्रे जगन्नाथमहाप्रसादं ( आट्के ) भुक्त्वा तदनन्तरमिमं प्रसादं गृहाण। मणिस्तु प्रसादं भुक्त्वा शिवालये शिवं दृष्ट्वा श्रीरामकृष्णं प्रणम्य जगाम। तद्गमनकाले श्रीरामकृष्णः सस्नेहमाह पुनरागच्छ। अपिच तव वर्त्तनं विद्यते।

---

श्रीश्रीरामकृष्णकथामृतस्य चतुर्थभागस्य चतुर्विंशखण्डस्यायमनुवादः।

निरञ्जनं नित्यमनन्तरूपं भक्तानुकम्पाधृतविग्रहं वै।
ईशावतारं परमेशमीडयं तं रामकृष्णं शिरसा नमामः।

# समाप्तम्

---

ब्रह्मपुरस्थशिरोमणिमुद्रालये श्रीअनन्तत्रिपाठिशर्मणा

मुद्रितम्।

# शुद्धिपत्रम्

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | १९ | असमथः | असमर्थः |
| १६ | ११ | सांद्ध | सार्द्धं |
| २३ | ५ | संसारण | संसारिणः |
| | ३२ | गावाम् | गवाम् |
| | ३४ | कलशाला | कलाशाला |
| ४९ | १० | चिन्तय-ति | चिन्तयति |
| ५० | १६ | खव | खर्व |
| ५२ | १८ | मातृवया | मातृतया |
| ५४ | २ | श्वश्र | श्वश्रू |
| ६४ | ११ | वञ्छमयी | वाञ्छामयी |
| ८४ | २१ | हाजाराख्य कश्चित् ब्राह्मणः | हाजाराख्यः कश्चित् पुरुषः |
| ८५ | ६ | वाक्षसि | वक्षसि |
| ८६ | १७ | उद्धता | उद्धृता |
| ९४ | १९ | एतत्त | एतत्तु |
| ९६ | २ | निरचिनवम् | निर्वचनं मे |
| ९८ | ९ | ब्रहि | ब्रूहि |

| पुटम् | पंक्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ९९ | ४ | सुवण | सुवर्णं |
| ९९ | १३ | जनाति | जानाति |
| १०१ | १३ | अन्मरूप | आत्मारूप |
| १४२ | ६ | अनुवत्तन | अनुवर्त्तन |
| १०६ | १२ | प्रणान् | प्राणान् |
| ११४ | १३ | कमीश्वर | किमीश्वर |
| ११५ | १२ | ज्ञानमात्रापर | ज्ञानमात्रपरा |
| १२६ | १५ | वाक्यं | तत्त्ववाक्यं |
| १२६ | १९ | आमिषे | आमिक्षे |
| १२७ | ५ | तैलपाक | तैलपक्व |
| १५१ | १९ | अहत: | अनाहतः |

